एतेन अतालानां सर्वेषामालापे प्रवेशः। वर्णालङ्कारस्तु निरर्थक-हुङ्कारादिशब्दः सङ्गीतोक्त-सरिगमेत्यादि वर्णालङ्कारश्च।

आलप्तेर्वहुधा भदा न प्रपञ्चभियेरिताः ॥१५२

निवद्धमाह—

वद्धं धातुभिरङ्गैश्च निवद्धमभिधीयते।
शुद्धं छायालगं क्षुद्रमिति तच्च त्रिधा मतम् ॥१५३

तत् निवद्धम्। तत्र शुद्धमाह—

आलापै र्धातुभिश्चाङ्गैः संयुक्तं शुद्धमुच्यते।
आला·ो·त्र सार्थक-पदरेवेति साम्प्रदायिकाः ॥१५४

हरिनाकस्तु--

आलापो गमकालप्तिरक्षरैर्वर्जिता मता ॥१५५। इत्याह

सङ्गीतसारे तु—

शुद्ध-शालग-सङ्कीर्णभेदाद् गीतं त्रिधा मतम् ॥
तत्र क्षुद्रगीतमेव संङ्कीर्णशब्देनोच्यते ॥१५६

तच्च स्यात्त्रिविधन्तु शुद्धकमिदं छायालगं क्षुद्रकमिति तेनैवोक्त-त्वात् दामोदरोक्तं कथयिष्यते।

हरिनायकस्तु—

संज्ञात्रयं निवद्धस्य प्रवन्धो वस्तु-रूपकम्।
चतुर्भिर्धातुभिर्वद्धस्त्वङ्गैः षड्‌भिश्च कल्पितः।
प्रकृष्टो यश्च वन्धः स्यात् स प्रवन्धो निगद्यते ॥१५७

एतेन शुद्धगीतमेव प्रवन्ध इत्युच्यते। अथ रूपक—

त्र्यादिभिर्धातुभिश्चाङ्गैः पञ्चभिर्वस्तु कथ्यते।
द्विधातुकं तथा द्व्यङ्गं रूपकं परिकीर्त्तितम् ॥१५८। इति

अथ धातुमाह—

प्रवन्धावयवो धातुः स चतुर्धा प्रकीर्तितः ।
उद्ग्राहक-मेलापक-ध्रुवाभोग इति क्रमात् ॥१५९

अवयवो भागविशेषः ।

उद्ग्राहः प्रथमो भागस्ततो मेलापकः स्मृत. ।
ध्रुवत्वाच्च ध्रुवः पश्चादाभोगस्त्वन्तिमो मत. ॥१६०

प्रवन्धावयवोधातु. स त्रिधेति गीतप्रकाशकारेणोक्तम् । उद्ग्राह-ध्रुवाभोगरूपेण त्रिधेति भावः । तदुक्तं शिरोमणौ—

उद्ग्राहः प्रथमः पादः कथितः पूर्वसूरिभिः ।
ध्रुवत्वाच्च ध्रुवो मध्य आभोगश्चान्तिम. स्मृतः ॥१६१

ध्रुवत्वान्निश्चलत्वात् पुनः पुनरुपादानादित्यर्थः । यत्तु हरिनायकेनोक्तं—

ध्रुवाभोगान्तरे जातो धातुरन्योऽन्तराभिधः ।
स तु शालगसुड़स्थः रूपकेष्वेव दृश्यते ।
मेलापकान्तराख्यौ तु न भवेतां क्वचित् क्वचित् ॥१६२। इति

दामोदरेण—

उद्ग्राहं प्रथमं गीत्वा ध्रुवं गायेत्ततःपरम् ।
ततोऽन्तराध्रुवस्तस्मादाभोग-ध्रुवको ततः ॥१६३
उद्ग्राहः प्रथमः पादः कथितः पूर्वसूरिभिः ।
गीत्वा पूर्वपदं न्यासो यत्र स ध्रुवको मतः ।
यत्रैव कविनाम स्यात् स आभोग इतीरितः ॥१६४

अत आभोगे कविनाम दातव्यं, न तु यत्र कविनाम स आभोग इति । तदुक्तं—

'आभोगे कविनाम स्यात्तथा नायकनाम च' ॥१६५ । ति

अथाङ्गान्याह—

प्रबन्धस्य षड़ङ्गानि स्वरश्च विरुदं पदम् ।
तेनकः पाट-तालौ च स्वराः सरिगमादयः ॥१६६
गुणोल्लेखतया यत्तद् विरुदं परिकीर्तितम् ।
ततोऽन्यवाचिकं यत्तु तत् पदं समुदाहृतम् ॥१६७
तेनेति शब्दस्तेनः स्यान्माङ्गलार्थेऽवधारितः ।
धां धां धुग्धुगेत्याद्याः पाटा वाद्याक्षरोत्कराः ॥१६८

आदि-यत्यादिकास्तालास्तालः स कथयिष्यते ॥१६९

दामोदरन्तु अङ्गं मध्ये पदपरित्यागेन गमकमाह। किन्तु गीत-गुणमध्ये गमकः पूर्वाचार्य्यैर्लिखितः। नत्वङ्गतया, तस्माद्-गमकशब्दोऽत्र पदवाचक इत्यवगेयम्[१]। सङ्गीत-पारिजाते—

पद्-ताल-स्वरः पाटास्तेनो विरुद-नामकः।
इति गीते षड़ङ्गानि कथितानि मनीषिभिः ॥१७०
पदानि वाचकाः शब्दास्तालाश्चच्चत्पुटादयः।
स्वराः षड्जादयस्ते स्युः पाटो वाद्योद्भवाक्षरम् ॥१७१
तेनः स्यान्माङ्गलः शब्दो विरुदं गुणनामयुक् ॥१७२। इति

अथ जातिमाह—

जातयः स्युः प्रबन्धानां पञ्चैव मुनिसम्मताः।
मेदिनी नन्दिनी दीपन्यथ स्यात् पावनी तथा ॥१७३
तारावली तथैतासां लक्षणं प्रतिपाद्यते।
षड़ङ्गा मेदिनी प्रोक्ता पञ्चाङ्गा नन्दिनी तथा ॥१७४
दीपनी चतुरङ्गा स्यात् पावनी त्र्यङ्गिका मता।
द्व्यङ्गा तारावली प्रोक्ता पुराणैर्गीतवेदिभिः।
एतेनैकाङ्गः प्रबन्धो न भवतीति प्रतिपादितम् ॥१७५

---

१। इत्यवधेयम् ?

पारिजाते—

प्रवन्धजातयः पञ्च वर्त्तन्ते ताः क्रमेण च।
षड्भिरङ्गैर्मेदिनी स्यान्नन्दिनी पञ्चभिर्भवेत्॥१७६
चतुर्भिर्दीपनी प्रोक्ता त्रिभिरङ्गैस्तु पावनी।
द्वाभ्यां तारावली जातिरङ्गाभ्यामुपजायते॥१७७
भेदः शुद्धप्रवन्धानामानन्त्यादेक एव हि।

तत्रापि—

तालेनैकेन वा द्वाभ्यां त्रिभिर्वा वहुभिस्तथा।
प्रवन्धान् सुकविर्नूनं यथेच्छमुपकल्पयेत्॥१७८

किञ्च—

बहुतालाः प्रबन्धास्तु रागैर्बहुभिरेव च।
एकरागेण वा कल्प्याः पाटादीनां विधानतः॥१७९
आदिमध्यान्त-विन्यासात् पाटादीनां विधानतः।
भेदा वहुतरास्तेषां कस्तान् कार्त्स्न्येन वक्ष्यति॥१८०

तदुक्तं—

न रागाणां न तालानां न वाद्यानां विशेषतः।
नापि प्रवन्धगीतानामन्तो जगति विद्यते॥१८१ इति।

तत्प्रकारमाह—

अत्राभोगे कवेर्नाम तथा नायकनाम च।
एकताली निवध्नीयादालापानन्तरे तथा॥१८२

इदानीन्तनास्तु आलापाभोगयोरेकत्र कवि-नायकयोर्नाम कुर्वन्ति, तत्र मूलं न पश्यामः। किञ्च—

अत्र प्रथमतस्तालो गीयते यस्तु ते नरः।
गीतावसाने दातव्यं मानं गान-समाप्तये॥१८३

शक्तिवर्ण्य[1]-विशेषेण नामान्येषाञ्च कारयेत्।

**शक्तिविशेषो यथा—**

अकारादि-क्षकारान्ताक्षर-विन्यासान्मातृका-प्रवन्धः ॥१८४

किञ्च, सरिगमेत्यादि-स्वरनामाक्षर-विन्यासविशेषवशाद् वाञ्छितार्थ-प्रकाशनेन स्वरार्थ-प्रवन्ध इति। वर्ण्यविशेषेण यथा—विष्णुवर्णने विष्णुप्रकाशकः प्रवन्ध इति। किञ्च—

आदियत्यादिकैस्तालैर्दशभिर्नवभिः पुनः।
सप्तभिर्वापि कल्प्यन्ते प्रवन्धा रागरञ्जिताः ॥१८५
अत्र वाहुल्यभयादुदाहरणानि नोपन्यस्तानि।

किञ्च—

एलाद्या दुष्कराः सन्ति प्रवन्धा मुनि-भाषिताः।
तेभ्यः षड्विंशतिः प्रोक्ता हरिनायक-सूरिणा। १८६
कथ्यन्ते क्रमशस्ते च नाममात्रेण केवलम्।
पञ्चतालेश्वरो वर्णस्वरश्चैवाङ्गचारिणी ॥१८७
स्वरार्थमातृका चैव तथा रागकदम्बकः।
स्वराद्यकरणं वर्त्मन्यथ तालार्णवस्तथा ॥१८८
श्रीरङ्गः श्रीविलासश्च पञ्चभङ्गिस्ततःपरम्।
पञ्चाननोमातिलको सिंहलीलस्तथापरः ॥१८९
त्रिभङ्गिर्हंसलीलश्च तथा हरिविलासकः।
सुदर्शनः स्वराङ्गः श्रीवर्धनो हर्षवर्धनः ॥१९०
वीरः श्रीमङ्गलश्चैव लाहड़ी च प्रकीर्त्तिता।
नवरत्नाभिधः प्रोक्तस्तथा शरभलीलकः ॥१९१
कण्ठाभरणनामा चेत्येते षड्विंशतिर्मताः।
चन्द्रप्रकाशकाद्याश्च विधत्तो षट् तथा परे ॥१९२

---

१। वर्णयितुं योग्यं वर्ण्यम्।

संप्रत्येते तु सुकराः कविभिर्न भवन्ति हि ।
एषु ये मुकराः पञ्चषास्तानेव प्रचक्ष्महे ॥१९३

कायबाल.—

एभ्योऽन्यो कायवालाख्यः स एवादौ निरुच्यते ।
यतस्तालाः प्रकाश्यन्ते पाटमात्रेण केवलम् ।
पदाना कल्पनाभोगे कायबाल. स ईर्य्यते ॥२९४

उदाहरणन्तु गीतप्रकाशे मृग्यम् ।

स्वरार्थः—

स्वरैः पाटै. पदैस्तालै रचना-वाञ्छित-क्रमात् ।
यस्य स्यात्तेनकैर्न्यासः सावर्ण स्वर उच्यते ॥१९५
स्वरादेरादि-विन्यासभेदादेष चतुर्विधः ।

स्वरादिवर्णस्वर., पाटादिवर्णस्वर, पदादिवर्णस्वर, तेनादिवर्ण-स्वरश्च—

वर्णस्वर.—

यत्र स्वल्पाक्षरैरेव वाञ्छितार्थोऽभिधीयते ।
स स्वरार्थो भवेद्द्विधा शुद्ध-मिश्र-प्रभेदत. ॥१९६

स्वराक्षरै. सरिगमपधनिभिर्यथेच्छ वाञ्छितार्थोऽभिधीयते चेत्तदा स्वरार्थ इति ।

मातृका—

एकैकमातृकावर्ण-पूर्वकाणि पदानि चेत् ।
क्रमेण यत्र गीयन्ते मातृका सा त्रिधा मता ॥१९७
दिव्या च मानुषी दिव्यमानुषी चेति तत्र तु ।
दिव्या संस्कृतया वाचा मार्गतालैश्च गीयते ॥१९८
मानुषी प्राकृतगिरा देशीतालेन निर्मिता ।
द्वयोर्मिश्रयणादुक्ता मातृका दिव्यमानुषी ॥१९९

तालेनैकेन रागेण वहुभिर्वा प्रयोगतः।
सर्वमन्त्रमयी ह्येषा सर्वसिद्धिप्रदायिनी ॥२००
मार्ग-देशीतालौ वक्ष्येते, तयोर्मध्ये येनकेनचिन्निर्मितेत्यर्थः ।

स्वल्परागकदम्बः—

अल्पो रागकदम्वोऽस्ति रागाणामेव दर्शनात् ।
अस्य रागकदम्वस्य भाषादेर्नियमो न हि ॥२०१
अन्यस्तु दुष्करत्वान्न लिखितः।

तालार्णवः—

तालार्णवे भूरितालो भवेत् संस्कृत-भाषया।
योगाद् गद्यस्य पद्यस्य स द्वेधा परिकीर्त्तितः ॥२०२

श्रीरङ्गः—

तालै र्रागैश्चतुर्भिः स्यात् श्रीरङ्गोऽन्ते पदान्वितः।
( पदैः सुप्तिङन्तैरन्ते प्रान्ते घटितः )।

श्रीविलासः—

स्वरान्तः श्रीविलासः स्यात्ताल[1] रागैश्च पञ्चभिः ॥२०३
(स्वराः सरिगमाद्या अन्ते देया इत्यर्थ.)।

पञ्चभङ्गी—

तेनकान्तः पञ्चभङ्गी।

(श्रीविलास एव तेनाशब्दान्तः स्याच्चेत्तदा पञ्चभङ्गी भवति)।

पञ्चाननः—

पाटैः पञ्चाननोऽन्तगैः ॥२०४

(अस्यैवान्ते पाटाश्चेद्दीयन्ते, तदा पञ्चाननः)।

---

१। तानैः ?

सिंहलीलः—

स्वरैः पाटश्च विरुदैस्तेनकै र्यो विरच्यते।
सिंहलीलेन तालेन सिंहलीलः स उच्यते ॥२०५

तालस्तु चूड़ामणौ—

सिहलीलो लघोरन्ते दत्रयं परिकीर्त्तितः।

हंसलीलः—

स्वनामतालको हंसलीलोऽङ्घ्रि पद-पाटजौ ॥२०६

(स्वनामतालकः हंसलीलतालेन घटितः। अङ्घ्रि पद-पाटजौ[1] कोऽर्थः? एकपादः पदैर्निर्मितः एकस्तु पाटैरित्यर्थः)।

तालस्तु रत्नमालायां—

हंसलीलो विरामान्तं लघुद्वयमुदाहृतम्। इति

लाहड़ी—

यत्र वीररसेन स्यात् संग्राम-चरितस्तुतिः।
वहुभिश्च वलैश्चैव लाहड़ी परिकीर्त्तिता ॥२०७
नात्रोक्ता दुष्कराः केचित् पञ्चतालेश्वरादयः।
ईषद्भेदान्नसुकरा अप्युमातिलकादयः ॥२०८

अतो गीतप्रकाशकारेणोक्तमेतेषां लक्षणादिकं, नात्र वर्णितमुक्त-प्रकार-निर्विशेषादिति।

किञ्च—

सूड़प्रवन्धोऽपि शुद्धगीतमध्ये वहुभिर्लिखितः। तल्लक्षणन्तु—

ताला न वादिका यत्र पाटादिरहिता यदि।
सूड़प्रवन्धः कथित एकराग-निषेवितः ॥२०९। इति

अथ छायालगमाह—

शुद्धस्य लगतिच्छायां यत्तच्छायालगं विदुः।
रञ्जकं तद्ध्रुवेत्तालैर्वाद्याद्यैः सूड़कल्पितम् ॥२१०

---

१। पद-पाठजौ ?

(वहूनां तालानामेकत्र गुम्फनं सूड़ं, छायां लगतीत्यनेन शुद्धस्य यत्किञ्चिल्लक्षणेनेदं भवतीत्युक्तम्)। तदुक्तम्—

उक्तानामेव भावानां छायामात्रं भवेद्यदि।
छायालगः स विज्ञेयो मुनिभिर्भरतादिभिः ॥२११

(अस्य सालगमिति नामान्तरमपि)।

तदुक्तं हरिनायकेन—

अथ च्छायालगो यस्तु सूड़ः स एव सालगः। इति
(अस्य तु मतभेदाद्बहुत्वम्)।

तथा च दामोदर-पञ्चमसारसंहितयोः—

ध्रुवको मन्ठकश्चैव प्रतिमन्ठो निःसारुकः।
वासकः प्रतितालश्च तथान्या चैकतालिका ॥२१२

यतिश्च झुमरी चेति सालगसूड़ ईरितः॥२१३

ध्रुवकादीनां भेदमाह—

ध्रुवकाः षोड़श प्रोक्ता मन्ठकाः षट् प्रकारकाः।
प्रतिमन्ठश्च पञ्चैव सप्तख्याता निःसारुकाः ॥२१४
चत्वारो वासकाः प्रोक्ताश्चत्वारः प्रतितालकाः।
एकताली च त्रिविधा चतस्रो यतयो मताः ॥२१५
केऽप्याहुश्चच्चरीकाद्याः सन्त्यन्ये दश सालगाः।
ऊनविंशतिरेवं ते भवन्ति भुवि सालगाः ॥२१६

हरिनायकेऽपि—

आद्यो ध्रुवस्ततो मण्ठः प्रतिमण्ठक एव च।
अड्डतालः पूतीवासः एकतालीत्यसौ मतः ॥२१७
अयन्तु सूड़ः प्राक्सिद्धः शार्ङ्गदेवस्य सम्मतः।
इत्यादि सालगानान्तु लोके सिद्धिर्मतो न हि ॥२१८

दुष्करत्वात्तन्न मया लक्षणैस्तैः प्रकीर्त्तिताः।
प्रयुज्यते संप्रति यः सूड़ो रम्यः कवीश्वरैः।
स एव संप्रत्यस्माभिर्लिख्यते लोक-सिद्धितः ॥२१९

तत्र च—

आदि-यतिर्निःसारुश्चाज्ञतालस्त्रिपुटस्तथा।
रूपको झम्पको मण्ठः एकतालीति कीर्त्तिता ॥२२०
एभिस्तु नवभिस्तालैः कथितः सूड़ उच्यते।
इत्येष रञ्जकः सूड़ो गाने वाद्ये च नर्त्तने ॥२२१। इति
न स्यात् प्रायोडुतालोऽत्रत्याह दामोदरः स्वयम्।
केचित् कुडक्कोपाड्डौ चात्राहुस्तेन भवेदयम् ॥२२२
अप्येकादशतालात्मा स इदानीं विविच्यते।
प्रागादियतिर्निःसारु-मण्ठादीनां यथाक्रमम्।
गानमन्ते चैकताल्या इत्येष नियमः क्वचित् ॥२२३

किञ्च—

आदिशालो भवेदादावन्ते स्यादेकतालिका।
अण्येषां नियमाभाव एवमाहुश्च केचन ॥२२४

अथैतेषां ध्रुवमण्ठलक्षणत्वमाह—

अथैतेष्वेव तालेषु केचित्स्युर्ध्रुव-लक्षणाः।
मण्ठ लक्षणकाः केचित् केचिच्चोभय-लक्षणाः ॥२२५

तदुक्तं—

ध्रुवाद्यौ यति-निःसारु-मण्ठान्त्यो मण्टलक्षणः।
( अन्त्य एकताली )।
आदि-रूपक-झम्पाड्डु-त्रिपुटाः स्युर्द्विलक्षणाः ॥२२६
( द्विलक्षणाः ध्रुवलक्षणा मण्ठलक्षणाश्च )।
कुडक्को मण्ठलक्ष्मा स्याद्विलक्ष्मोपाड्डुतालकः ।२२७

सारे तु—

चञ्चत्पुटश्चाचपुटः सिंहविक्रीड़ितस्तथा ।

सिंहनन्दनमुख्या ये तेऽपि स्युर्मण्ठलक्षणाः ॥२२८

तत्र ध्रुवलक्षणमाह—ज्ञेयः स ध्रुवलक्षणो यदि भवेदुद्ग्राह एव ध्रुवस्तूच्चः खण्डमिह द्वि धातु-गदितं द्विर्गेयमेवोच्चकैः ।

( द्विधातु द्व्यवयवम् , प्रथमखण्डापेक्षया द्वितीयखण्ड उच्चैर्गेयः ) द्वित्रिमात्राधिकः प्रथमखण्डसममात्रो वा—इति केचित् । उदाहरणं यथा आदिताले मल्लाररागेण—

जय जय सुन्दर नन्दतनुज दलिताञ्जननिभ जनरञ्जन आ ।

कमलदललोचन गोकुलवल्लभ गोपसुता-धृतिभञ्जन आरे ॥

इति प्रथमखण्डः ।

यमुनापुलिन-विभूषण रसमय वेणुवाद्यरत नृत्यगुरो ।

मुरहर गोवर्द्धनधर अभ्रमुपति-मदमर्दन तिआइ आइ आरे ॥

( इत्युच्चखण्डः । अत्र खण्डद्वयमपि द्विर्गेयम् । प्रथमखण्डापेक्षया द्वितीयखण्ड उच्चैर्गेयः ) । अथ ध्रुवः—

मधुरानन मानद मुदवर्द्धन मधुसूदन भवरस्य विभो ।

शरणागत-रक्षक वरकरुणामय नरहरि इति गायति आरे ॥

( ततस्त्रि आइ आइ आरे आरे इत्यादयो निरर्थकाः, सतालगीत-लालित्यार्थं प्रयुज्यन्ते गायकैः, नेदं लक्षण-प्रविष्टम् ) ।

केचित्तु ध्रुवलक्षणस्य चातुर्विध्यमाहुः । तदुक्तं—

ध्रुव-लक्ष्मा चतुर्धायं विनोदो वरदस्तथा ।

नन्दकः कञ्चुकश्चेति............॥२२९

स च सङ्गीतसारे—

आलापादि-ध्रुवोऽयं मत इह करुणे गीयते कञ्चुकाख्ये,

आलापान्ते ध्रुवो यो वरद इति मतो देवतानां स्तुतौ सः ।

उद्ग्राहादिर्द्विखण्डो यदि भवति तथालापकादिः स नन्दो,
गायेत्तं चोत्सवेषु स्फुटमथ कुतुके स्यादविनोदोपि तद्वत् ॥२३०

( लक्षण-व्यतिक्रमस्तु छन्दोऽनुरोधात् ) ।

अथ मण्ठ-लक्षणमाह—

स स्यान्मण्ठकलक्षणो यदि समावुद्ग्राहकाभोगका-
वुद्ग्राहाद्द्विगुणोऽथ सार्द्धगुणको वा स्याद् ध्रुवस्तत्र च ॥२३१

( उद्ग्राहाभोगयोरपेक्षया ध्रुवो द्विगुणमात्रावित्यर्थः । समौ सममातृकौ ) ।

तदुक्तं हरिनायकेन—

साम्यं यत्र तु मात्रायारुद्ग्राहाभोगयोरथ ॥२३२ । इति

[ उदाहरणमादितालो मल्लाररागेण ]

कृष्ण कृपामय मङ्गलविग्रह विश्वभयापह देव हरे ।
गोपकुलोत्सववर्द्धन माधव गावर्द्धनधर ति आइँ आइ आरे ॥

[ इत्युद्ग्राहः ]

श्रीवृन्दावन भूपनि आ आ ।
राधामुख-सरसीरुह-मधुकर नन्दनन्दन रसकन्द ति आरे ॥

[ इति सार्द्धैकगुणमात्रो ध्रुवः ]

पीताम्बर सुरवन्द्य गदाग्रज सुन्दर नटवर शौरे ।
कंसरिपो मुरमर्दन माधव घनश्याम इति गायति आया रे ॥

[ इत्याभोगः ]

एतेषां सालगादन्यत्र प्रायिकत्वमित्येके ।

तदुक्तं कौमुद्यां—

अमी उक्तप्रवन्धेषु वाहुल्येन स्थिताः पुनः ।
सालगे नियता एभिर्विना तत् सम्भवो न हि ॥२३३ । इति

[ उदाहरणानि तु ग्रन्थान्तरे द्रष्टव्यानि, मया तु प्रपञ्चभिया नोक्तानि ]

ननु—

'उक्तो द्विखण्ड उद्ग्राह आभोगोऽपि द्विखण्डकः ।
मण्ठलक्ष्मानुसारेण ध्रुवके खण्डकल्पना' ॥२२४

इत्युक्तत्वात् । उद्ग्राहाभोगयोर्द्विद्विखण्डात्मके सिद्धे उक्तोदाहरणे कथ वहवः खण्डा दृश्यन्ते ? उच्यते- -उद्ग्राहादीनां द्विखण्डत्वेपि प्रतिखण्डमवान्तर-खण्डकल्पनैरेव निर्मेयम् । अतो यावद्भि-रवान्तर-खण्डै रञ्जकता भवति, तावन्त एव खण्डा उद्ग्राहादिखण्डे निवेशनीयाः । तदुक्तम्—

एकद्वित्रिचतुःखण्डैस्तालेषु विविधेषु च ।
उद्ग्राहादेः कल्पनान्तु यथालालित्यमाचरेत् ॥२३५ । इति

( अत्र खण्डादिलक्षणं वाहुल्यभयान्नोक्तम् ) ।

* *

*

## गीत प्रकरणे

### ॥ तालाङ्ग-परिभाषा ॥

तत्र छन्दोरत्नाकरे—

मस्त्रिगुरुस्त्रिलघुश्च नकारो, भादिगुरुः पुनरादिलघुर्यः ।
जोगुरुमध्यगतोरलमध्यः, सोऽन्त्यगुरुः कथितोन्तलघुस्तः ॥२३६
गुरुरेको गकारश्च लकारो लघुरेककः ।
प्लुतः पकार इत्येवं भो भूतश्च प्रकीर्त्तितः ॥२३७
अनुद्रुतो द्रुतश्चैव लघुर्गुरुस्ततःपरम् ।
प्लुतश्चैव क्रमेनैवं तालाङ्गानि तु पञ्चधा ॥२३८

अनुद्रुतं विनान्येषां संज्ञा दलगपात्मिकाः ॥२३९

अथ मात्रानियममाह—

लघ्वेकमात्रन्तु गुरुर्द्विमात्रः, प्लुतस्त्रिमात्रो द्रुतमर्धमात्रम् ।
अनुद्रुतन्तु द्रुतकार्द्धमात्रं, विराम इत्यस्य भवेच्च नाम ॥२४०

अथैषां विन्यास-प्रकारमाह—

तिर्य्यग्रेखानुद्रुताङ्कं शून्याकारं द्रुतं स्मृतम् ।
लघुऋज्वल्पिका रेखा रेखाधोवक्रिता गुरु ॥२४१
प्लुतं गुरोर्मूद्धलेखा तिर्य्यक् चेदक्षपार्श्वगा ॥२४२

[ ।, O, S, ꝺ९ ]

( एतेषां घातस्थानादिकमत्र नोक्तम् ) ।

अथ मूडाङ्कतालानाह । यत —

विना तालेन गीतादेर्गीतशुद्धिर्न जायते ।
कर्णधारं विना नाव इवातस्तान् प्रचक्ष्महे ॥२४३ । इति
स्थितेष्वप्यन्यतालेषु प्रबन्धाङ्ग तया पुनः ।
आद्याद्येकादशानाञ्च तालाना लक्षण ब्रुवे ॥२४४
।।दिरेकेन लघुना रासो यः कैश्चिदुक्यते । (१)
(तालानां ध्रुवलक्षणादिकमुक्तम् ) ।
जय सुनायक वाञ्छित-दायक इनि ॥२४५

अ । यति.—

लघद्वन्द्वाद् द्रुतद्वन्द्वं यतिरित्युच्यते बुधैः ।
साचार द्विविधा प्रोक्ता शुद्धा सत्रिपुटान्तरा ॥२४६

( त्रिपुटस्तालविशेषोऽन्तरे पदमध्ये यस्याः, अयं गीतमध्ये न प्रविशति ) ।(००)

**तत् शुद्धा यथा—**

**जय जय नरक-नाशन दुष्टसञ्चय-विहित-शासन रे ।**

त्रिपुटान्तरा यथा—नौमि कौशिकयाग हिंसकताड़कासुतनाशक। त्रिपुटः—सा स्सा सा रि ग म रि गम पध पम ध नी ध नि सा स्सा सा। अथ यतिः- दण्डकान्तरचारि-मुनिपर देविराक्षसशासकम्। यतिः—शारदाम्बुजमञ्जुमुखमखिलामरेश्वर वन्दितम्। त्रिपुटः—आ ता था रि कुकुदि मिकि झें कृण थो ङ्गि ट ता त्ता ता। अथ यतिः—अखिलजनहृदि-मोदवर्द्धन देवकीसुत पाहि माम्॥

अथ निःसारुः—

सविराम-द्रुतद्वन्द्वात् निःसारे तु लघुद्वयम्॥२४७

यथा—विबुधाधिप भयभञ्जन पाहि निखिलजनरञ्जन रे।

(निःसारु षड् विधेययं ध......नामा)

अथ अड्डतालः—

षड् विधोऽड्डुस्तत्र शङ्कुशीलौ ख्यातौ ब्रवीमि तौ।
लघोर्द्रुतद्वयेन स्यात् शङ्कुः श्रृङ्गार-वीरयोः॥२४८

(।००)

शान्ते शीलो विरामान्तद्रुतद्वन्द्वाल्लघुर्मतः॥२४९

(००—।)

यथा—जय जनार्दन विभो भवभयापह हरे।

(इदं द्वयोरप्युदाहरणम्)।

अथ त्रिपुटः—

द्रुतत्रय विरामान्तं त्रिपुटः परिकीर्त्तितः॥१५०

(०००—)

यथा—कृष्ण केशव कंसमर्दन पाहि गोकुलचन्द्र हे।

अथ रूपकः—

रूपकन्तु विरामान्तद्रुतद्वन्द्वमुदाहृतम्॥२५१

(००—)

यथा—नन्द-तनुज मञ्जुलमुख मङ्गलमय पाहि माम् ।

अय झम्पः—

कोलोद्रुतद्वन्द्वात् सविरामादितीतरे ॥२५२

(०० —)

यथा—गोपेन्द्रतनुजवर पाहि मां मोदकर ।

अथ मण्ठक.—

सगणाल्लघवोऽशब्दाश्चत्वारो मण्ठके स्मृता ॥२५३

( अशब्दा: शब्दरहिता. )

(ऽ । ≣)

यथा—गोपीकुलदुकूलचौर नन्दतनय जय किशोर ।

अथ एकताली—

द्रुतेनकेनैकताली सा त्रिधा परिकीर्त्तिता ।
विपुला चन्द्रिका रामा तत्रापि विपुलोच्यते ॥२५४
ध्रुवमात्रेण भिन्नत्वात् नोक्ते अत्र तथोत्तरे ।
आलाप-पूर्वकोद्ग्राहा विपुलानन्ददायिनी ॥२५५

( आलापं गीत्वा तत्र उदग्राहं गायेदित्यर्थ )। अतएव एकतालीत. पूर्वमालापगानेमेतन्मूलकमेव। (०)

यथा—गोवर्द्धनधर मामव मुरहर ।

मतान्तरे तथोच्येते कुडकोपाड्डुताल्कौ ।
द्रुतद्वन्द्वाल्लघुद्वन्द्वं कुड़के परिकीर्त्तितः ॥२५६

(००।।)

यथा—गोपोत्सवकर रक्ष सुरेश्वर !

उपाड्डुमाह—

उपाड्डुतालमेकेन द्रुतेन परिकीर्त्तितम् । (०)

यथा—नमः कमलाभ ते ।

(लयवशादेकतालीतो भिन्नम्। 'एवं तु नवतिः सूड़ः क्वचिदेकादशोऽपि')। अनयोरुदाहरणन्तु सङ्गीतकौमुदी-गीतप्रकाशादौ द्रष्टव्यम्। मया तु प्रपञ्चभयान्न लिखितम्। अथ तालस्य प्रयोगर्यथा—

तालप्रयोगानर्हा ये नोक्ताः सैकं शतं बुधैः।
तेऽप्यत्र तद्विदां प्रीत्यर्लिख्यन्ते च सलक्षणैः ॥२५७
चञ्चत्पुटे तप्लुतौ च भगौ चाचपुट स्मृतौ।
पलगा गलगाश्चैव षट्पितापुत्रके मताः ॥२५८
गत्रयं सा प्लुताद्यन्तं सम्पेष्टक-नामनि।
ताले गत्रयमुद्घट्टे आदौ तु लघुरेकः सः ॥२५९
गानाट्टायुच्यते कैश्चिद्दर्पणे दद्वयाद्गुरुः।
एकान्तरविरामाद्यश्चर्चरी षोड़श द्रुतैः ॥२६०
नो दो दौलः सिंहलीले कन्दर्पे दौ लघूगुरुः।
गुरुत्रयाल्लपगलप्लुताः स्यात् सिंहविक्रमः ॥२६१
सलौ प्लुतौ च श्रीरङ्गः रङ्गलीलेतु लौ गुरू।
रङ्गताले द्रुतौ गश्च द्रौ द्रुतौ मः परिक्रमे ॥२६२
प्रत्यङ्ग-संज्ञके ताले मगणात् स्याल्लघुद्वयम्।
गजलीले विरामान्तं ज्ञेयं लघुचतुष्टयम् ॥२६३
ताले त्रिभिन्ने नपदाः लौ दौ गौरीविक्रमे।
विरामे नौ हंसलीले वर्णनीले तु दौलगौ ॥२६४
राजचूड़ामणौ ताले द्रुतौ लश्च द्रुतौ लगौ।
रङ्गद्योते मो न पौ च राज्ञि गौ दौ गुरुर्लसौ ॥२६५

( राज्ञि राजतालः )।

लनपा गोल गौलश्च सिंहविक्रीड़िते नगौ।
चतुर्द्रुतानिलौ दौ च गुरुः स्याद् वनमालिनि ॥२६६
वर्णताले गलौ दौगः मिश्रताले दलौ गपौ।
रङ्गप्रदीपे तगपाः हंसनादे लपौ दपौ ॥२६७

लतौग: सिंहनादे स्यात् लौ दौदौ सल्लिकादिके ।
लश्च दश्च लघु स्यातां ताने शरभलीलके ।
ताल्लपौ रङ्गाभरणे दौलस्तुरगलीलके ॥२६८
( अयमेव हयलीलेति केचित् ) ।

गुरुद्वयं ल: प्लुतो गुरुदौत: प्लुतो लघु. ।
प्लुतो गुरुर्नोनि:शब्दाश्चतुर्णां सिहनन्दने ॥२६९
जोलगौरि च जयश्रीर्विजयानन्दे लघुर्यगौ ।
लौ द्रुतौ प्रतिताले च द्रुतौ लश्च द्वितीयके ॥२७०
मकरन्दे द्रुतद्वन्द्वं कीर्त्यौ लसगणप्लुता ।
प्लुताद्यन्तो गोविजय. ललभा जयमङ्गले ॥२७१
लघुगुरुद्रुतौ ताले राजविद्याधराभिधे ।
सगणाल्लघवोऽशब्दाश्चत्वारो मण्ठके पुन ॥२७२
जयताले तु भगणात् लौ लघु द्वौ द्रुतौ प्लुत ।
सुदुर्बले दौ लघु च नि सारौ लात् विरामिल ॥२७३
द्रुताद्विरामिदं क्रीड़ा त्रिभङ्गिस्तु लघूगुरू ।
कोकिलप्रिये गुरुलपा श्रीकान्ते तगणाल्लघु ॥२७४
चत्वारस्तु द्रुता गुर्वोर्मध्ये स्युविन्दुमालिनि ।
समे लौ दादं विरामि नन्दने लौ द्रुते प्लुत ॥२७५
उदीक्षणे लौगुरुश्च मल्लिका गद्वयात् प्लुनम् ।
ढेङ्किका रगणो वर्णमण्ठिका लदला द्रुनौ ॥२७६
लौ दौ गुरुश्चातिनन्देऽन्तरक्रीडा विरामि दा. ।
लघुताले चतुर्ला: स्यु दौ लौ गौ दीपके स्मृतौ ॥२७७
लघु: प्लुतो त: सगणो यत्र सोऽनङ्ग ईर्य्यते ।
विषमेऽष्टौ द्रुता मध्ये प्रान्ते च मविरामका: ॥२७८
लदौ दनौ गुरुर्नान्दीतालोऽयं भरतोदित ।
नयतुष्कादृगुरु: कुन्दे मुकुन्दे लददा लघु: ॥२७९

द्रुतेनैकेनैकताली कथिता पूर्वसूरिभिः ।
चतुर्विधस्तु कङ्कालः पूर्णः खण्डः समोऽसमः ॥२८०
त्रिद्रुतैर्दलगैः पूर्णः खण्डे द्वाभ्यां गुरुद्वयम् ।
समे लघुगुरुद्वन्द्वाद् विषमे लाद्गुरुद्वयम् ॥२८१
चतुस्ताले दत्रयाल्लो केचिद्गदचतुष्टयम् ।
विरामादि विरामान्तं लचतुष्कं च खंखुड़ी ॥२८२
अभङ्गे लप्लुतौ राजझङ्कारे रगणाद्द्रुतौ ।
एकेन सविरामेण लघुना लघुशेखरः ॥२८३
प्लुतात् प्रतापशिखरे विरामान्तद्रुतद्वयम् ।
जगझम्पे गुरुस्त्वेको विरामान्तं द्रुतत्रयम् ॥२८४
चतुर्मुखाभिधे ताले जगणो नप्लुतौ भवेत् ।
पौ लो गौ लोऽचतुर्व्योम प्लुतं तु यगणस्तथा ॥२८५
द्रुतद्वन्द्वं समुद्दिष्टं ताले झङ्कारके बुधैः ।
प्रतिमण्ठे सभगणौ केश्चिन्माल्ल इतीर्य्यते ।।२८६
स्यात्तृतीयाभिधो ताले विरामान्तं द्रुतत्रयम् ।
वयन्ते नगणान्मः स्यात् ललिते दद्वयास्लगौ ॥२८७
शिवताले लाद्गुरुश्च करशाखा चतुर्द्रुताः ।
षट्तालाख्ये विन्दुषट्क वर्द्धने दद्वयाल्लपौ ॥२८८
लौ दौ वर्णयतौ राजनारायणे द्रुतौ जजौ ।
द्रुतद्वन्द्वं लघुश्चैको मदने परिकीर्तितः ॥२८९
पार्वतीलोचने दो द्वौ भददा भजजाः क्रमात् ।
सारङ्गस्तालः कथितो विरामान्तं चतुर्द्रुतम् ॥२९०
श्रीनन्दीवर्द्धने भात् पः लीलाताले दप्लुताः ।
विलोकिते लगौ दौ पः स्याल्लगौ ललितप्रिये ॥२९१
जनकाभिधताले स्यान्नयसाश्च प्लुतो गुरुः ।
द्रुतद्वयं विरामान्तं लक्ष्मीशो लौ प्लुतस्ततः ॥२९२

विन्दुद्वयं विरामान्तं द्प्लुतौ रागवर्द्धने ।
उत्सवः कथितः प्राज्ञैर्लघोः पूर्वं प्लुतो यदि ॥२९३
एवमेकाधिकशतमुक्तास्ताला मनीषिभि ।
दामोदरादावेतेषां केषुचिद्दृश्यतेऽन्यथा ।[१]
ऋषीणां मतबाहुल्यात् विकल्पस्तेषु काङ्क्षति ॥२९४। इति

अथोदारणमाह । चञ्चतपुट —
तपौ चञ्चत्पुट प्रोक्त ।

(ऽऽ।§)

यथा—नन्दतनुज कञ्जनयन मामव करुणानिधे । अयमष्टकल ।
भगौ चाचपुटे स्मृतौ ।

(ऽ।।ऽ)

यथा—गोकुलरमणाममूह भावये। अय षट्कल ।
पलगा गलपाश्चैव षट्पितापुत्रके मता ।

(५।ऽऽ।५)

यथा—कृष्णचैतन्यचन्द्रप्रभो दववृन्दैकवन्द्य प्राणनाथ हे भो पाहि माम् । अय द्वादशकलः ।
अपरेषा वाहुल्यभयान्नोक्तम् ।

१। श्रील शुभङ्करस्य भणितौ सङ्गीतदामोदरे, तृतीय-स्तवके 'अर्द्धमाश द्रुत ज्ञेयमेकमात्र लघु स्मृतम् । * * ताले चच्चतपुटे ज्ञेय द्वन्द्व लघु प्लुत इत्यादि आरम्य 'मगणश्च प्लुताद्यन्त मंपक्केष्टकतालके । एकाधिकशतो ताले षष्टिर्मुख्यतमा इमे ॥' (१—६०) पर्यन्त द्रष्टव्यम् ।

## ॥ अथ क्षुद्रादिगीतमाह ॥

अथ क्षुद्रगीतमाह—

ताल-धातुयुतं वाक्यमात्रं क्षुद्रमितीर्य्यते ।
बाहुल्येनेष्यते ह्यत्र ध्रुवमण्ठानि-लक्षणम् ।
न खण्डाक्षरमात्रादिवन्धोऽपि परिगण्यते ॥२९५

किञ्च—

आदि-निःसार-मण्ठैश्च वर्जितं क्षुद्रगीतकमिति सङ्गीतसारे, गीतप्रकाशेऽपि दृश्यते, तत्र मूलं न पश्यामः ।

सर्वो योज्योऽप्यनुप्रासस्तेष्वन्त्यस्यैव निश्चयः ॥२९६
( अन्त्यस्यानुप्रासस्य ) ।

तदुक्तं—

पञ्झटिकायां विरुदावल्याञ्च क्षुद्रगातादौ ।
अन्त्यानुप्रासोऽयं निवेशनीयो विशेषज्ञैः ॥२९७। इति

स च यथा दर्पने—

व्यञ्जनं चेद्यथावस्थं पूर्वस्वर-समन्वितम ।
आवर्त्ततेऽन्त्ययोज्यत्वादन्त्यानुप्रास उच्यते ॥२९८

प्रबन्धादौ क्षुद्रगीते बाहुल्येनास्य संस्थितिः । २९९
( अस्यान्त्यानुप्रासस्य ) ।

एतेन शुद्ध-सालगयोरिवाक्षरमात्रादिनिर्णय इत्युक्तं भवति ।

क्षुद्रगीतस्य भेदानाह—

तच्चतुर्विधमेव स्यात्तत्र चित्रपदाभिदा ।
चित्रकला ध्रुवपदा पाञ्चालीति प्रभेदतः ॥३००

अथ चित्रपदामाह—

केवलं पदमात्रेण वैचित्र्यं यत्र दृश्यते ।
न धात्वादौ विचित्रत्वं ज्ञेया चित्रपदेति सा ॥३०१

( पदवैचित्र्यन्तु अकठोरानुप्रास-प्रसादादिगुणयुक्तत्वमिति ) ।

उदाहरणं—श्रीजगन्नाथवल्लभे नाटके (गुण्डकिरीरागेण)—

कलयति नयनं दिशि दिशि बलितम् ।
पङ्कजमिव मृदु-मारुत-चलितम् ॥
केलिविपिनं प्रविशति राधा ।
प्रतिपद-समुदित-मनसिज-बाधा ॥ध्रु॥
विनिदधती मृदु-मन्थर-पादम् ।
रचयति कुञ्जरगतमनुवादम् ॥
जनयतु रुद्रगजाधिप-मुदितम् ।
रामानन्दराय-कवि-गदितम् ॥ (आभोगः)

ध्रुवे सममात्रिकत्वात् मण्ठलक्षणायोगेन नेदं सालग गीतम् । तत्र हि ध्रुवे तु द्विगुणा सार्द्धैकगुणा वा स इति लक्षणात् ।

अथ चित्रकलामाह—

उद्ग्राहाभोगयोर्मात्रा समा न्यूना ध्रुवे यदि ।
आद्याष्टावधि-पादाढ्या ज्ञेया चित्रकला हि सा ॥३०२

( त्रिपदा चतुष्पदा यावदष्टपदा चित्रकलाया भेदाः ) ।

यथा गीतगोविन्दे गुर्जरीरागेण—

हरिरभिसरति वहति मृदुपवने ।
किमपरमधिकसमं सखि—भवने ।
माधवे मा कुरु मानिनि मानमये ॥ध्रु॥

इत्याद्यनन्तरं—श्रीजयदेवकवेरिदमुदितम् ।
सुखयतु सुजलजनं हरिचरितम् ॥ (आभोगः)

अथ ध्रुवपदामाह—

ध्रुवं गीत्वा भिन्नधातुर्यत्राभोगस्तु गीयते ।
उक्तयोर्लक्षणयुता सैका ध्रुवपदा मता ।
भिन्नधातुभिरुद्ग्राहध्रुवाभोगैः परा द्विधा ।।३०३

ध्रुवपदा द्विधेति सम्बन्धः, उक्तयोश्चित्रपदाचित्रकलयाः, तत्रैका ध्रुवेणाभोगेन च पदद्वयवती, ध्रुवगानानन्तरमेवाभोगगानमिति-तात्पर्यं, भिन्नधात्विति धातुरत्र तालविशेष इति गीतप्रकाशे। एकस्मिन् भागे भङ्ग्या अन्यथा गानमिति केचित् ।

अथ प्रथमाया उदाहरणं-(माररीरागेण रूपकतालेन)—

सुजन वद मधुरिपुनाम ।
दुष्कृतमपहाय याहि दुर्लभ हरिधाम ।।ध्रु।।
पुत्तमित्र बान्धवगणमिह न कलय सत्यम् ।
पुरुषोत्तममिश्र-गदिनमनुभावय नित्यम् ।। (आभोगः)

इयमेव पाश्चात्यभाषायां छटिकिलेति[1] वदन्ति । परा अन्ये ध्रुव-पदेत्याहुः—इयमुद्ग्राहध्रुवाभोगरूपण पदत्रयवती । अत्रोदाहरणम् (गुर्ज्जरीरागेणादितालेन)—

१। It seems that Sri Narahari Chakravurty quoted from *Asin-I-Akbari* by Abul Fazl-I-'Allami (Vide AK. translated by colonel H. S. Jarrett). Abul. Fazl gave various names of the Dhrupada-Prabandha-Gāna in connection with the topics on *Sangita*. He said : "In the Tilanga and Carnatic dialects they are called *Dhruva*...... Those of Bengal are called *Bangala*, and those of Jounpur, *Chutkala*, while the songs of Delhi are called *Kaul* and tārāna. .. .. .. .. The songs of Mathura are called *Bihnu-pad* (Vishnu-pada) consisting of four, six and eight lines, sung in the honour of Vishnu" (p. 226). By "पाश्चात्य-भाषायां" the author of *Sangita-Sara-Sangraha* meant the Persian i. e. *mlechha* or *yavanika* language as distinct from Sanskrit (Hindu).

केशव कमलदलेक्षण कामद कान्त मुरान्तक कलित-सुरेश।
नन्दतनुज जनरञ्जन भवभय-भञ्जन कञ्जचरण कमलेश ॥
—इति उद्ग्राहः

जय जय गोपवधू-वदनाम्बुजमत्तमधुप मकरध्वज-भूप।
पीताम्बर वरनागर रसमय मञ्जुल भुज दलिताञ्जनरूप ॥ध्रुवः
परमानन्दकन्द मधुराधर-मुरलीवाद्यधुरन्धर-धार।
नरहरिमव मधुसूदन माधव गोवर्द्धनधर गोकुलवीर ॥आभोगः

पदचतुष्टयोदाहरणं यथा गीतावल्यां (६) धानसीरागेण नन्दन-तालेन—

न कुरु कदर्थनमत्र सरण्याम्।
मामवलोक्य सतीमशरण्याम् ॥
चञ्चल! मुञ्च पटाञ्चलभागम्।
करवाण्यधुना भास्करयागम् ॥ध्रुव
न रचय गोकुलवीर! विलम्बम्।
विदधे विधुमुख! बिनतिकदम्बम् ॥
रहसि विभेमि विलोलदृगन्तम्।
वीक्ष्य सनातन! देव! भवन्तम् ॥ (आभोगः)

आसामन्योन्य-साङ्कर्याद् भेदा बहुतरा मताः।
ग्रन्थबाहुल्यभीतेन मया ते नेह वर्णिताः।
तत्र चेदाग्रहो गीतगोविन्दे वहुवीक्षताम् ॥३०४

तथाच श्रीजगन्नाथवल्लभनाटक-गीतावल्यादौ विशेषोऽपि द्रष्टव्यः।

अथ पाञ्चालीमाह—

अतिविस्तीर्ण-पदतापञ्च प्रोक्ता मनीषिभिः।

हरिनायकेनास्य निर्वचन कृतम्—

पाञ्चालैर्बहुभिः पादैर्द्विविधा सध्रुवाऽध्रुवा ॥३०५

( ध्रुवसहिता ध्रुवरहिता च )।

उदाहरणं सुलभम्। अस्या एव गौड़ पाञ्चालीति प्रसिद्धिः।

एवं भाषान्तरे ज्ञेयं गीतं गीत-विशारदैः।

तदुक्तं—

दिव्यञ्च मानुषञ्चैव गीतं स्याद्दिव्यमानुषम्।

दिव्यं संस्कृत-सम्पन्नं मानुषं प्राकृतोत्थितम् ॥३०६

संस्कृत-प्राकृतोत्थञ्च दिव्यमानुषमुच्यते।

केचिद्देशविशेषोत्थभाषया मानुषं विदुः ॥३०७

अङ्ग-वङ्ग-कलिङ्गाद्याः देशभाषादिहेतवः।

येषु येषु च देशेषु या भाषा भाषाश्चैकवल्लभाः।

तास्तु तत्तज्जनालापाहृत्य प्रतियोजयेत् ॥३०८

कोहलीयेतु कश्चन विशेष उक्तः। स यथा—

सममर्द्धसमञ्चेति विषमं गीतकं त्रिधा।

पादैः समानमात्रैस्तु चतुर्भिः सममुच्यते ॥३०९

तृतीय-प्रथमपादौ समौ तु द्वि-चातुर्थकौ।

जायते यस्य गीतस्य तदर्द्धं सममीरितम् ॥३१०

चत्वारोऽपि पृथक् पादा यस्य मात्रानुसंख्यया।

तद्गीतं विषमं प्राहुर्मुनयो भरतादयः ॥३११

इदं सङ्करगीतविषयमिव प्रतिभाति। अपरेऽपि विशेषा हरिनायकादिभिर्लिखिताः सन्ति, मया तु तेऽनातिप्रयोजनत्वादुपेक्षिताः।

**अथ गीतगुणा :—**

गीतस्याथ गुणा ग्रहो लय-यती-मानस्य वैचित्र्यकं,
स्याद्धातो: पुनरुक्तता नवनवत्वञ्चेति नैकार्थता ।
मातो रागसुरम्यताथ गमकश्चार्थस्य नैर्मल्यकं,
तेन्नानां (?) स्वरपाठयोश्च विविधाकारेण संयोजनम् ॥३१२

**किञ्च—**

एषु सर्वेष्वपि गुणेष्वावश्यकतमन्त्विदम् ।
गुणालङ्कार-रसवद्वाक्यस्य ग्रहणं यत ॥३१३

**अथ ग्रहमाह—**

तालो गीतगते: साम्यकारी तस्य ग्रहास्त्रय ।
अनागत-समातीत-सञ्ज्ञा सर्वत्र ते मता. ॥३१४

अनागतमाह—

गीतारम्भाद् यदा पूर्वं समुच्चार्य्याक्षरद्वयम् ।
तालस्य न्यसनादुक्तस्तदैवानागत-ग्रह ॥३१५

अत्र गीतादौ यदक्षरमधिक गृह्यते तदनागत तालाभ्यन्तरे न प्रविष्टम् । यथा—'जय जय कमलाकुचचन्दनमण्डनवक्ष स्थल दूर्जन-खण्डन षण्डा सनदगुण पण्डित पुण्डरीकलोचनानु आ' । अत्र नि मारु ताले जयजयेत्यक्षरचदुष्टय तालत्राह्यमेव, कमलेत्यारभ्य ताल पतति ।

समग्रहमाह—

गीतोच्चारणमात्रेण यदा तालस्य सङ्गतिः ।
तदा समग्रह· प्रोक्त समकाल-समुद्भवात् ॥३१६
( यथोदाहरणादिमण्ठादौ ) ।

**अथ अतीतग्रहमाह—**

कला या तु पतिष्यति पश्चात् सा प्रथमे यदि ।
विन्यस्य गीयते[1] तालस्तदातीतग्रह· स्मृत. ॥३१७

---

१ । 'गृह्यते' इति पाठान्तर ।

यथा गोपगोविन्दे—'शिशिरशीतलमञ्जूवञ्जुल-मृदुलकिशलयसङ्कुल-मित्यादि यतितालेन गीयते। अत्र हि प्रथमं लघुद्वयं पश्चाद्द्रुतद्वयम्, अत्र तु प्रथमं द्रुतद्वयम्, पतनि प्रान्ते लघुद्वयमेव।

एवं सर्वेषु तालेषु त्रिविधो ग्रह इष्यते।
केचित्तु केषुचित्ताल-विशेषेषु चिरग्रहम् ॥३१८

यथा सङ्गीतसारे—'कुडक्कादितालेष्वतीतग्रहः स्यात्तथैवाऽत्र यत्यादिकेऽनागतश्च। समाख्य-निःसारुकादौ च केचित्तथानागतातीतयोर्वैपरीत्यं तु अनागतग्रहे अतीतग्रहलक्षणमतीतग्रहेऽनागतग्रहलक्षणमाहुरित्यर्थः।

उक्तञ्च—

'अतीताक्षरसंयुक्तस्तालः स न्यस्यते यदि।
...... तदातीतग्रहः प्रोक्तः' इति ॥३१९

अथ लयः—

गीत-वाद्य-पद-न्यास-क्रियाणां समता मिथः।
तथा क्रियातालयोर्वा लय इत्युच्यते बुधैः ॥३२०

इति वाचस्पतिः।

हरिनायकस्तु—

क्रियान्तरेण विश्रान्तिर्लय इत्यभिधीयते।
स त्रिधा कथितः प्राज्ञैः द्रुतो-मध्यो विलम्बितः ॥३२१[1]

यतिमाह—

लयप्रवर्त्तनस्यैव नियमोऽसौ यतिर्भवेत्।
स्रोतोवहा समा गोपुच्छिकेति त्रिविधैव सा ॥३२२

(१) एकमात्रो द्रुतोमध्यो विश्रान्तिद्विगुणाद् द्रुतात्।
विलम्बितस्तु द्विगुणः सर्वेऽमी सर्वतालगाः॥
—इति भक्तिरत्नाकरे

मानमाह—

विश्रान्तकारिणी तालक्रिया मानमिहोच्यते।
तालविश्रामकारित्वान्मानं तालसमाप्तिकृत् ॥३२३[१]

इति तस्य भदः द्विधेति।

अथ धातोः पुनरुक्तता—गीतावयवस्य पुनः पुनर्गानं नवनवत्वञ्च वारंवारं गीयमानमपि रञ्जनातिरेकेण नवनवमिव प्रतीयमानत्वम्।

मातोर्वाक्यस्य नैकार्थता—एकार्थं वाक्यं भङ्ग्यन्तरेण प्रयोज्यामित्यर्थः। धातुमातुलक्षणमुक्तम्।

रागसुरम्यतामाह—

कर्णप्रियं यतिस्थं स्याद्भङ्ग्यायुक्तं सुखावहम्।
मन्द्रमध्यमताराख्यं रागरम्यत्वमीरितम् ॥३२४

गमकमाह—

स्वरस्य कम्पो गमकः श्रोतृचित्तसुखावहः।
(तस्य प्रभदस्तिरिपः स्फुरितः कम्पितस्तथा ॥३२५
नील आन्दोलित-वलि-त्रिभिन्न-कुवलाहनाः।
उन्नामिनः प्लाविनश्च हुङ्कृतो मुद्रितस्तथा।
नामितो मिश्रितः पञ्चदशेति परिकीर्त्तिताः ॥३२६

एषां लक्षणमाह—

लघिष्ठ-डमरुध्वनिकम्पानुकृति-सुन्दरः।
द्रुततुर्यांवेगेन तिरिपः परिकीर्तितः ॥३२७

---

(१) तच्चेद्ध्रुवे द्वितीयायां कलायां निपतेत्तदा।
आवर्तो वर्धमानाख्यस्तालो तालज्ञसम्मतः ॥
मानं ध्रुवे त्वन्तिमायां कलायां निपतेद् यदा।
आवर्तो हीयमानाख्यस्तदा प्रोक्ता मनीषिभिः ॥

—इति भक्तिरत्नाकरे

वेगे द्रुततृतीयांशनिनिर्मितो स्फुरितो मतः ।
द्रुतार्द्धमानगानेन कम्पितं गमकः विदुः ॥३२८
नीलस्तु द्रुतवेगेनान्दोलितो लघुवेगतः ।
वलिर्विविधवक्रत्वयुक्तो रागवशाद्भवेत् ॥३२९
त्रिभिन्नस्तु त्रिषु स्थानेष्वाविश्रान्तघनस्वरः ।
कुवलो वलिरेव स्यात् ग्रन्थिलः कण्ठकोमलः ॥३३०
स्वरमग्रिममाहत्य निवृत्तस्त्वाहतो मतः ।
उन्नमितः स तु प्रोक्तो यः स्वरानुक्तरोत्तरान् ॥ ३३१
क्रमाद् गच्छेत् प्लावितस्तु प्लुतगानेन कम्पनम् ।
हृदयङ्गमहुकारगभितो हुङ्कृतो मतः ॥३३२
मुखमुद्रणसम्भूतो मुद्रितो गमको भवेत् ।
स्वराणां नमनादुक्तो नामितो ध्वनिवेदिभिः ॥३३३
एतेषां मिलनान्मिश्रिस्तस्य स्युः भूयो भिदाः ।
नोक्ताः प्रयोगानर्हत्वादज्ञेयत्वाच्च ते मया ॥३३४[1]

एतदभ्यास-प्रकारस्तु—

माघपौषनिशायान्तु शेष प्रहरमात्रके ।
साधकः सलिले स्थित्वा गमकान् साधयेदिमान् ॥३३५

केचित्तु—

स्वरस्य कम्पो गमकः स्वरभेदात् स सप्तधा ॥३३६

—इति सप्तस्वरभेदेन सप्त कार भवतीत्यर्थः। इदन्तु नारद-संहितायां दृश्यम् ।

**अथार्थनैर्मल्यम—**

**उच्चारणेन वाक्यस्य सम्यगर्थावबोधनम् ।**
**सुखतादोषरसयुगर्थनैर्मल्यमेव तत् ॥३३७**

१। **इति भक्तिरत्नाकरे ।**

तेन पाटस्वराणाञ्च वैचित्र्येण निवेशनम् ।
पाटस्वरान्ते तेनस्य प्रयोगो नादितः क्वचित् ॥३३८

कविसम्प्रदायेन स्वरपाटान्तरमेव तेनस्य प्रयोगो न प्रबन्धादावित्यर्थः ।

किञ्च,

प्रस्तार-नष्टोद्दिष्टादि-वर्गप्रहगणांशकाः ।
प्रकृतानुपकारित्वाद्बहुत्वान्न मयोदिताः ॥३३९
गणाद्यभावे ये दोषा उक्तास्तेषामनित्यता ।
नित्यदोषा बुधैरुक्ता य उच्यन्तेऽत्र ते मया ॥३४०

यथा—

तालहीने कायरोगो धातुहीने धनक्षयः ।
धातुमातुपद यत्र नास्ति तद्गीतकं रिपुः ॥३४१

अथ गीतदोषानाह—

गीतेषु दोषाः स्खलनादि वाण्या,-स्तालाद्यभावेन निबन्धञ्च ।
स्युर्धातुमात्वादिहतिः कटूक्ती, रसादिहानिः श्रवणाश्रियत्वम्॥३४२
इत्यादि दोषा गीतेषु बहवो यदि सन्त्यपि ।
नोक्तास्ते चेद्गुरुस्तेषां गाने तत्तद्विलोकयताम् ॥३४३

यद्यपि हरिनायकेन—

गीते दीर्घो भवेद् ह्रस्वो ह्रस्वो दीर्घः क्वचित् क्वचित् ।
एकत्वे च क्वचिद्द्वित्वं द्वित्वेनैकत्वमेव च ॥३४४
...... श्लिष्टता क्वापि क्वचिद्वर्णस्य वैकृतं ।
क्वचित् कोमलता गाढ़े गाढ़ता कोमले क्वचित् ॥३४५

इत्याद्यविशेषेणोक्तं, तथापि भाषागीतविषयमेवेदम् । तदुक्तं गीतप्रकाश-दामोदरयोः—

पौनरुक्तं न भाषाढ्ये गीते दोषोऽभिजायते ।
शीघ्रोच्चारे च वर्णानां तथा चैव प्रसारणे ॥३४६

लिङ्गान्यत्वे विसन्धौ च संयुक्ताक्षर-मोक्षणे ।
असंयुक्तेऽपि संयोगे ह्रस्वदीर्घ-व्यतिक्रमे ॥३४७

भवन्त्येते न दोषाय संस्कृते प्राकृतेऽपि च ।
वारद्वयाधिकं गीते पौनरुक्त्ये तु दोषभाक् ॥३४८

सङ्गीतसारेऽप्येवमेवोक्तं— संस्कृत-प्राकृतयोस्तु तत्तत्लक्षण-हीनत्वं दोष एव. दुष्टपदं श्रुतिकटु इत्यादि दोषाः काव्यप्रकाशादिभ्यो ज्ञातव्याः ।

अथ गायकलक्षणमाह—

गायकस्तु त्रिधा प्रोक्त उत्तमो मध्यमोऽधमः ।
मृष्टध्वनिः सुशरीरो नानाराग-प्रभेदवित् ॥३४९

ग्रह-मान-लयोपेतस्तालज्ञो विजितश्रमः ।
त्रिस्थानस्पर्श-गमकेष्वनायासलसद्गतिः ॥३५०

प्रबन्धगानकुशलः सावधानः क्रियापरः ।
आयत्त कण्ठ-स्थायिज्ञो निर्दोषो धारणान्वितः ॥३५१

उत्तमो मध्यमः प्रोक्तो गुणैः कतिपयैरितः ।
गुणयुक्तोऽपि दोषाढ्यो यस्तु सोऽधम उच्यते ॥३५२

सोऽपि पञ्चधा—

शिक्षाकारोऽनुकारश्च रसिको रञ्जकस्तथा ।
भावकश्चेति गीतज्ञाः पञ्चधा गायनं जगुः ॥३५३

अन्यून-शिक्षणे दक्षः शिक्षाकारो मतः सताम् ।
अनुकार इति प्रोक्तः परभङ्ग्यनुकारकः ॥३५४

रसाविष्टस्तु रसिको रञ्जकः श्रोतृरञ्जकः ।
गीतस्यातिशयाधानाद् भावकः परिकीर्तितः ॥३५५

गायकविभेदमाह—

एकलो यमलो वृन्दो गायकश्चेति स त्रिधा।
[ एक एव तु यो गायेदसावेकलगायनः।
स-द्वितीयस्तु यमलः स-वृन्दो वृन्दगायन· ।।]३५६

गायकदोषमाह—

भीतोऽव्यक्तपद. शिरोविचलित फुत्कारको विस्वर.।
स्यात् स्पन्दष्टरदो[1] निमीलनयनो ग्रामायवस्थस्तथा ।।३५७

गायन् वक्रगलः स्वराल्पबहुल. स्याद्राग-समिश्रकः।
कम्पाङ्गोऽनवधानको विरसकृत् काकस्वरः सत्वर. ।।३५८

भीतो भयान्वितः। 'घर्घरध्वनिरव्यक्त उच्यते गीतवेदिभिः, इतरेषाञ्च रागाणा मिश्रको भुरि-मिश्रणात्' इति रागसंमिश्रक. , 'स्थाय्यादिष्ववधानेन निर्मुक्तोऽनवधानक.'। काकस्वरः क्रूरव.।

किञ्च—

वितालको गीततनुप्रसारक.
करालकश्छागगलोऽव्यवस्थित.।
उत्फुल्लगस्तस्त्वनुनासिक.[2] स्या-
देव हि दुष्टः किल गायनः स्यात् ।।३५९

( वितालस्तालविच्युत., करालो घाटिताननः, गायन्नासिकया गीतं गायकस्त्वनुनासिकः )।

सन्त्यन्ये वहवो दोषा नोक्ता विस्तरशङ्कया।
ग्रन्थान्तरेभ्यस्तज्ज्ञेया अनुक्ता गानदोषका. ।।३६०

१। सन्दृष्टरदो (—दृष्टदन्त.)?
२। 'उत्फुल्लगण्डस्त्वनुनासिक.' इति पाठः।

अथ वाग्गेयकार-लक्षणं—

वाङ्मातुरुच्यते गेयं धातुरित्यभिधीयते ।
वाचं गेयं च कुरुते यः स रागे यकारकः ।।३६१
व्याकार-काव्यालङ्काराशेष-कोष-विचक्षणः ।
स्मृत्यागमपुराणादिच्छन्दः शास्त्र प्रभेदवित ।।४६२
अशेषदेशभाषाज्ञः सर्वप्राकृत कोविदः ।
नीतिशास्त्र-कलाशास्त्र-शिक्षाशास्त्रविशारदः ।।
नानाधातुविवेकज्ञो लयतानादितत्त्ववित् ।।३६३ । इत्यादि

इति श्रील नरहरि-चक्रवर्त्तीना (घनश्यामदासेन वा) संगृहीते
सङ्गीतसारसंग्रहे गीतनिर्णयाख्यो प्रथमोऽध्यायः ।।१।।



# द्वितीयोऽध्यायः

## वाद्य-प्रकरणम्

अथ क्रमप्राप्त वाद्यमाह—

न वाद्येन विना यस्माद् गीत तालश्च शोभते।
तस्मान्माङ्गल्यमस्माभिर्वाद्यमत्र निगद्यते ॥१

ततानद्धशुषिर-घनानीति चतुर्विधम् ।[1]
तत वीणादिक वाद्यमानद्ध मुरजादिकम् ।
वंश्यादिकन्तु शुषिर कांस्यतालादिक घनम् ॥२

[ तत शुषिरमानद्ध घनमित्थ चतुर्विधम् ।
तत तन्त्रीगत वाद्यं वशाद्य शुषिरं तथा ।
चर्मविनद्धमानद्ध घन तालादिक मतम् ॥

तत्र तत यथा दामोदरे—

अलावनी ब्रह्मवीणा किन्नरी लघुकिन्नरी ।
विपञ्ची वल्लकी ज्येष्ठा चित्रा घोषवती जया ॥३

हस्तिका कुब्जिका कूर्मा सारङ्गी परिवादिनी ।
त्रिशरी शततन्त्री च नकुलौष्ठा च कसरी[2] ॥४

औदुम्वरी पिनाकी च निवन्धः पुष्कलस्तथा ।
गदा-वारणहस्तश्च[3] रुद्रोऽय स्वरमण्डल ॥५

कपिलासो मधुस्यन्दी घोणेत्यादि तत भवेत् ।
सिद्धैषा घटना लोके पारम्पर्योपदेशतः ।
तथापि वक्ष्ये द्वित्रीणां लक्षणं ग्रन्थरीतितः ॥६

१। 'ततानद्धशुषिराणि घनञ्चेति चतुर्विधम् ।'—भक्तिरत्नाकरे
२। ढंसरी ?
३। रावणहस्तश्च ?

अलावनी यथा—

कनिष्ठिका परिसार्द्ध[1]-मध्यच्छिद्रेण संयुतः ।
दशमुष्टिमितो[2] दण्डः खादिरो वैणवस्तथा ॥७

अधः करभवानूर्द्ध्वं छत्रावल्यभिशोभितः ।
नवाङ्गुलादधश्छिद्रोपरि चन्द्रार्द्धसन्निभाम् ॥८

निवेश्य चुम्बिकां तत्रालावुखण्डं[3] निवेशयेत् ।
द्वादशाङ्गुल-विस्तारं दृढ़पर्वमनोहरम् ॥९
चुम्बिकावेधमध्येन दण्डच्छिद्रेण[4] निर्मिताम् ।
अन्तावुमध्यगां डोरीं[5] कृत्वा स्वल्पां च काष्टिकाम् ॥१०

तथा संवेष्ट्य तन्मध्ये काष्ठिकां भ्रामयेत्ततः ।
यथा स्यान्निश्चलालावुरर्द्धश्च[6] करभोपरि ॥११
पञ्चाङ्गुलानि[7] सन्त्यज्यालावुं स्वल्पाञ्च बन्धयेत् ।
कोशान्तु निर्मिता पट्टमयीसूत्रकृताथवा ॥१२

समो श्लाक्ष्ना दृढ़ा देया तन्त्री[8]-विचक्षणैः ।
एतल्लक्षणसंयोगान्यालावणी प्रकीर्त्तिता ॥१३

विन्दुना न समुपेतं तुम्वीं[9] निक्षिप्य वक्षसि ।
मध्यमानामिकाभ्याञ्च वाद्या दक्षिण पाणिना ॥१३

१। 'परिधार्द्धि' वा ।
२। 'दशयष्टिमितौ' वा पाठः ।
३। 'भद्रालावुखण्डं' वा ।
४। 'दण्डच्छिद्रे तु' वा ।
५। 'डोवी' वा ।
६। 'निश्चलालाव्युर्वन्धश्च' वा ।
७। 'पञ्चाङ्गुलिषु' वा ।
८। 'समा सूक्ष्मा दृढ़ा तत्र तन्त्रीदया' इति वा पाठः ।
९। तुम्वं ?

तेम्वीमूलं समुत्पत्य वामाङ्गुष्ठेन धारयेत् ।
ततस्ताभिस्तु सर्वाभिः स्वरव्यक्तिर्विधीयते ।
त्रिस्वरो दक्षिणः पाणिर्बामस्तत्र चतुःस्वरः ॥१५

अलावन्यां स्थिता ज्ञेयाः सप्त षड्जादयः स्वराः ।
रागव्यक्तिर्यथा रागे भवेत् षड्जादिभेदतः ॥१६

अंश-न्यासविभेदाच्च तथात्रापि विधीयते ।
इयमलावनी प्रोक्ता मन.श्रवणरञ्जनी ॥१७

[प्रत्यक्षा सारदा-देवी वीजरूपेण संस्थिता ।
अपरा कच्छपी-वीणा सैव रूपवती क्वचित् ॥

इयमेव रूपवती त्यूव्यत इत्यर्थः। रुद्र इति रुद्रवीणा]

इत्यालवनी ।

अन्यासां लक्षण नोक्तं ग्रन्थवाहुल्यभीतिना ।
तजज्ञानगहिलैर्ज्ञेयं तत्तद्ग्रन्थेभ्य एव हि ॥१८

अथ आनद्धं यथा—

मर्दलो मुरजश्चैव ढक्का पटह-चाङ्गव ।
पणवः कुण्डली भेरी घण्टावाद्यञ्च झर्झर ॥१९
डमरुष्टमकिर्मन्थो हुडक्का मड्डु-डिन्डिमी ।
उपाङ्ग-दर्दु रावित्यादिकमानद्धमीरितम् ॥२०
आनद्धे मर्दलश्रेष्ठस्तस्मात्तल्लक्षण ब्रुवे ।

अथ सङ्गीतदामोदरे—

मर्दलः खादिरः श्रेष्ठो हीनः स्यादन्यदारुजः ॥२१
रक्तचन्दनजो रम्यो[1] गम्भीरध्वनिरुच्चकैः ।
सार्द्धहस्तप्रमाणन्तु दैर्घ्यमस्य विधीयते ॥२२

१। 'वाद्यो' इति वा पाठः।

त्रयोदशाङ्गुलं वाममथवा द्वादशाङ्गुलम् ।
दक्षिणञ्च भवेद्धीनमेकेनार्द्धाङ्गुलेन वा ॥२३

करणानद्धवदनो मध्ये चैव पृथुर्भवेत् ।
( करणं नाम षण्मासमृतवत्स-चर्म )
षण्मासीतो[1] मृतोवत्सस्तच्चर्म करणं मतम् ॥२४। इति
मृत्तिकानिर्मितश्चैष मृदङ्गः[2] परिकीर्तितः ।
पातयेत् खरलिं वाद्य-वादनार्थं च मर्दले ॥२५
( खरलिर्नाम लेपविशेषः ) ।

विभूतिं गैरिक-भक्तं केन्दुकेन च संयुक्तम् ।[3]
यद्वापि पिटकं देयं जीवनी-सत्त्वमिश्रितम् ।
सर्वमेकत्र पिष्टं तल्लेपः खरल्लिरुच्यते ॥२६। इति
( जीवनी हरितकी । लेपस्तु दक्षिणपुटे देयः )

यदुक्तं—
'वामास्ये पूरिकां दत्त्वा लेपं दद्याच्च दक्षिणे'। इति
(पूरिका नाम भक्त-लाज-चिपिटकानामन्यतमेन जलपिष्टं भस्म)।

---

१। 'षण्मासीयो' वा।
२। सङ्गीतदामोदरे मृदङ्गलक्षणं—
मृत्तिकानिर्मिताश्चैव मृदङ्गाः परिकीर्तिताः ।
एवं मर्दलकः प्रोक्तः सर्ववाद्योत्तमोत्तमः ।
अस्य संयोगमासाद्य सर्वं वाद्यञ्च शोभते ॥
सङ्गीतपारिजाते—
मध्यदेशे मृदङ्गस्य ब्रह्मा वसति सर्वदा ।
यथा तिष्ठन्ति तल्लोके देवा अत्रापि संस्थिताः ।
सर्वदेवमयो यस्मान्मृदङ्गः सर्वमङ्गलः ॥
पुनरपि पारिजाते—
उमापतिप्रणीतास्ते पाठवर्णाश्च विंशतिरित्यादयः ।
३। 'संमतम्' वा ।

आधुनिकास्तु—

ओदनं छागविड्भस्म चापि भस्म पुरातनम् ।
लोहाविड्मूषयोश्चूर्णं समभागं सुपेषयेत् ।
लेपयेद्दक्षिणपुटे लेपोऽयं वज्र ईरितः ॥२७

( पुरातनं भस्मेति वहुदिनमेकत्र स्थितं यत्किञ्चिद् भस्म, मूषा इति रीति-ताम्राद्यावर्त्तनपात्रम् ) ।

तत्र मर्दल-मुरजयोर्भेदमाह विश्वकर्मा—

त्रयोदशाङ्गुलो वामे मुखे स्याद्द्वादशाङ्गुलः ।
दक्षिणे तु मुखे धीरैर्मर्दलः परिकीर्त्तितः ॥२८
मुरजोऽष्टाङ्गुलो वामे दक्षे सप्ताङ्गुलो मुखे ।[१]
अङ्क्योर्द्धका लिङ्ग्यभेदात् स त्रिधा परिकीर्त्तितः ॥२९

तदुक्तं भरतेन—

हारीतक्याकृतिस्त्वङ्क्यो यवमध्यस्तथोर्द्धकः ।
आलिङ्ग्यश्चैव गोपुच्छसदृशः परिकीर्तितः ॥३०

अथ वादनमार्गः—

वादनस्य चतुर्मार्गा ईरिताश्चन्द्रमौलिना ।
घट्टिता विप्रकृष्टा च गोमुख्यालप्तिका तथा ॥३१

उद्देशक्रमेण लक्षणमाह—

घट्टिता करमूलस्य विकृष्टाङ्गुलमूलतः ।
गोमुखी चाग्रहस्तस्य चालनेन प्रदर्शिता ॥३२

( करमूलस्य चालनेन घट्टिता प्रदर्शितेत्याद्यन्वयः ) ।

---

१ । सङ्गीतदामोदरे मर्दल-मुरजयोरयं भेदः—

मर्दलः त्रयोदशाङ्गुल-वाममुख, द्वादशाङ्गुल-दक्षिणमुखः । मुरजस्त्वष्टादशाङ्गुल-वाममुखः, सप्तदशाङ्गुल-दक्षिणमुखः ।

कनिष्ठाङ्गुलि-संयोगे मर्वाङ्गुलि-विवर्त्तनात् ।
आलप्तिका समाख्याता नन्दिने चन्द्रमौलिना ॥३३

अथ त्रिप्रकारं प्रहारमाह—

निगृहीतार्द्धनिगृहीन मुक्ताख्यञ्च मृदङ्गकम् ।
प्रहार-त्रितयं प्रोक्तं नन्दिने चन्द्रमौलिना ॥३४
( निगृहीताख्यमर्द्धनिगृहीताख्यञ्चेत्यर्थः ) ।

प्रत्येकलक्षणमाह –

करयोः पुटयोगेन निगृहीतमुदाहृतम् ।
स्यादर्द्धनिगृहीतन्तु करयोरेकस्य मोक्षणात् ॥३५
उभयोश्च परित्यागात्तथैवान्तरघाततः ।
क्षणे क्षणे कलासञ्च मुक्ताख्यः स उदाहृतः ॥३६

(कलासो वादनविशेषः । स च कलासोर्द्धकलासञ्च टीकिनीत्यादि-भरतोक्तः ) ।

अन्ये च भरतप्रोक्ताः प्रकारा वाद्यपाठयोः ।
सन्त्येवात्र न वाहुल्याद्भीत्यानेन मयोदिताः॥३७
स्त्रीपुंनपुंसकत्वं चान्यैरुक्तं मर्दलध्वनेः ।
तदप्यलेखि न मया प्रायो वाहुल्यभीतितः ॥३८

अथ मार्दाङ्गिक-लक्षणम् --

धीरो वाद्यविशारदः प्रवचनः पाठाक्षरव्यञ्जक-
स्तालाभ्यासरतः समस्तगमक-प्रौढ़-प्रकाशक्षमः ।
नानावाद्यविवर्त्तनर्त्तनपटुः स्वभ्यस्तगीतक्रमः
सन्तुष्टो मुखवादको द्रुतकरो मार्दङ्गिकः कीर्त्तितः ॥३९

अन्येषां लक्षणं विस्तरभयान्नोक्तम् ।

अथ शुषिरम् दामोदरे—

वंशोऽथ पारी-मधुरी-तित्तिरी-शङ्ख-काहलाः ।
डोड़ही-मुरली-वुक्का-शृङ्गिका-स्वरनाभयः ॥४०

श्टृङ्गं कापालिकं-वंशश्चर्मवंशस्तथापरः ।
एते शुषिरभेदास्तु कथिताः पूर्वसूरिभिः ॥४१

वंशलक्षणमाह—

मञ्जुलः[1] सरलश्चैव पर्वदोष[2]-विवर्जितः ।
वैणवः खादिरोऽपि स्याद्रक्तचन्दनजोऽथवा[3] ॥४२
श्रीखण्डजोऽथ सौवर्णो दन्तिदन्तमयोऽथवा ।
राजतस्ताम्रजो वापि लौहजः स्फटिकोऽथवा ॥४३
कनिष्ठाङ्गुलितुल्येन गर्भरन्ध्रेण शोधितः[4] ।
शिल्पविद्या-प्रवीणेन वंशः कार्य्यो मनोहरः ॥४४
वंशेनैव मतोऽपीति मतङ्गमुनिनोदितम् ।
ततोऽन्येऽपि तदाकारा वशा एव प्रकीर्तिताः ॥४५
तत्र त्यक्त्वा शिरोदेशादधो द्विमितमङ्गुलम् ॥४६
फुत्कार-रन्ध्रं कुर्वीत मितमङ्गुलि-पर्वणा ।
पञ्चाङ्गुलानि सन्त्यज्य तावद्रन्ध्राणि कारयेत् ॥४७
कुर्य्यात्तथान्यरन्ध्राणि सप्तसङ्ख्यानि कौशलात् ।
वदरीवीजतुल्यानि सन्त्यज्यार्द्धार्द्धमङ्गुलम् ॥४८
प्रान्तयोर्बन्धनं कार्य्यं स्वर्णाद्यैर्नादहेतवे ।
सिक्थकेन कला देया तेन सुस्वरता भवेत् ॥४९

( कला कलना । स्वर्णादिमुखबन्धस्थिरीकरणं सिक्थकेन सम्पादनीयमिति भावः । अयमुक्तप्रकारो वंशो नाम्ना पञ्चाङ्गुलः । एवं फुत्कार-रन्ध्राद् यावन्त्यङ्गुलानि परित्यज्य ताररन्ध्राणि

१ । 'वर्तुलः' वा ।
२ । 'सरलश्चैकपर्वदोष' वा ।
३ । 'वैणवः खदिरो वापि रक्तचन्दनजोऽथवा' इति वा पाठः ।
४ । 'सोऽन्वितः' वा ।

कारयेत्, तानि तन्नामानि भवन्ति। यथा षड़ङ्गुलत्यागे षड़ङ्गुलनामा वंश इत्यष्टादशपर्य्यन्तम्।)

**तदुक्तं—**

पञ्चाङ्गुलोऽयं वंशः स्यादेकैकाङ्गुल-वृद्धितः।[1]
षढ़ङ्गुलादिनाम्ना स्याद्यावदष्टादशाङ्गुलम् ॥५०

फुत्कारात्ताररन्ध्रस्य यावदङ्गुलमन्तरम्।
तदेव नाम वंशस्य वांशिकैः परिकीर्त्यते ॥५१

तत्र त्याज्याङ्गुलमाह—

एकाङ्गुलो द्व्यङ्गुलश्च त्र्यङ्गुलश्चतुरङ्गुलः।
अतितारतरत्वेन वांशिकैः समुपेक्षितः ॥५२

त्रयोदशाङ्गुलो वंशोऽपरः पञ्चदशाङ्गुलः।
निन्दितो वंशतत्त्वज्ञैस्तथा सप्तदशाङ्गुलः ॥५३

(फुत्काररन्ध्रादेतावदङ्गुलत्यागेनताररन्ध्रं न कार्य्यमित्यर्थः)।
तत्राप्यङ्गुलिविशेषत्यागेन श्रेष्ठमाह दामोदरे--

महानन्दस्तथा नन्दो विजयोऽपर[2] जयस्तथा।
चत्वार उत्तमा वंशा मतङ्गमुनि-सम्मताः ॥५४

तत्र कथमेषां महानन्द-संज्ञेत्याह—

दशाङ्गुलो महानन्दो नन्द एकादशाङ्गुलः।
द्वादशाङ्गुलमानस्तु विजयः परिकीर्त्तितः।
चतुर्दशाङ्गुलमितो जय इत्यभिधीयते ॥५५

एतेन दशैकादशद्वादशचतुर्दशाङ्गुलाः श्रेष्ठाः, पञ्चादिणवाङ्गुलान्ता मध्याः। एकद्वित्रिचतुस्त्रयोदश-पञ्चदशाङ्गुला निन्दिता इत्यर्थः।

---

१। 'वर्द्धितः' वा। २। 'विजयस्तु:' वा।

अथ वांशिकगुणाः दामोदरे—

सुस्थानत्वं सुस्वरत्वमङ्गुलि-सारणक्रिया ।
समस्तगमकज्ञानं राग-रागाङ्गवेदिता ॥५६

क्रिया-भाषा-विभाषासु दक्षता गीतवादने ।
सुस्थाने चापि दुःस्थाने नादनिर्माणकौशलम् ॥५७

गातृणां स्थानदातृत्वं तद्दोषाच्छादनन्तथा ।
वांशिकस्य गुणा एते मया संक्षिप्य दर्शिताः ॥५८

( गातृणां स्थानदातृत्वं गायकानां नादविरतौ तत्पूरकत्वम् )

अथास्य दोषाः—

बहुक्तत्वः शिरःकम्पः स्वस्थानाप्राप्तिरेव च ।
वृथा प्रयोगबाहुल्यमल्पता गीतवादने ।
एभिर्दोषैर्युतोऽतीव निन्दितो वांशिको मतः ॥५९

अथ रक्तवांशिक-लक्षणं—

स्थानकादिलयाभिज्ञो[१] गमकाढ्यः स्फुटाक्षरः ।
शीघ्रहस्तः कलाभिज्ञो वांशिको रक्त उच्यते ॥६०

अथाङ्गुलि-गुणाः—

प्रयुक्तिरर्द्धयुक्तिश्च युक्तिश्चेत्यङ्गुले गुणाः ॥६१

अथ फुत्कृति-गुणाः—

नैविद्यं[२] प्रौढ़ता वापि[३] सुस्वरत्वञ्च शीघ्रता ।
माधुर्य्यमपि पञ्चामी फुत्कृतेषु गुणाः स्मृताः ॥६२

१ । 'स्थानकाभिनयाभिज्ञो' इति वा पाठः ।
२ । नैविड्य ?
३ । चापि ?

फुत्कारेषु दोषमाह—

मीत्कारबहुलः स्तब्धो विस्वरः स्फुरितो[१] लघुः।
अमाधुर्य्यञ्च[२] विज्ञेयाः षड्दोषाः फुत्कृतेः क्रमात्।
नोक्तं लक्षणमन्येषां बाहुल्लाच्च प्रसिद्धितः ॥६३

अथ घनम् दामोदरे—

अनुरक्त विरक्तञ्च द्विविधं घनवाद्यकम्।
गीतानुगमनुरक्त विरक्तं तालसंश्रयम् ॥६४
करताल कांस्यवलो जयघन्टोऽथ शुक्तिका।
कम्पका घटवाद्यञ्च घन्टातोद्यञ्च घर्घरम्[३] ॥६५
झञ्झातालश्च मञ्जीरः कर्त्तर्य्यङ्कुर एव च।
द्वादशैते मुनीन्द्रेण कथिता घन-संज्ञकाः ॥६६

अथ करताल-लक्षणं—

त्रयोदशाङ्गुल-व्यासौ शुद्धकांस्य-विनिर्मितौ।
मध्ये मुखौ[४]-स्तनाकारौ तन्मध्ये रज्जु-गुम्फितौ ॥६७
पद्मिनीपत्रसदृशौ कराभ्यां रज्जु-यन्त्रितौ।
करतालावुभौ वाद्यौ पाठ विरामकटैविति[५] ॥६८

प्रकारान्तरमप्याहुः, तद् यथा—

त्रयोदश-यव-व्यासं वक्त्रपिण्डं यवोन्मितम्।
यव-पञ्चक-गम्भीरं मध्ये च यव-सप्तकम् ॥६९

---

१। 'स्फुटितो' इति वा पाठः।
२। अमधुरञ्च' वा।
३। 'कम्पिका पटवाद्यञ्च पट्टातोद्यञ्च घर्घरम्' इति वा पाठः।
४। 'मध्यमुखौ' वा।
५। 'पाटैर्भनटकैरिति' पाठः।

विस्तृतं वर्त्तुलं निम्नं यवत्रयमितं ततः।
पृष्ठतो मध्यदेशे च शिवलिङ्ग-समाकृतिः[१] ॥७०
यघ्येगुञ्जासमच्छिद्रं पट्टसूत्रादि-गुम्फितम्।
अत्यम्लपैष्टिनिर्दग्ध-शुद्धकांस्य-विनिर्मितम् ॥७१
सरक्ताङ्गुलि-सुस्निग्ध-सुदीर्घ-मधुरध्वणिन्।
घना निसा (?) विसं रक्त दृढं शुष्कं मनोहरम् ॥७२
काश्मीरादि-समुद्भुतं तालमाहुर्मनोषिणः।
सुनादं दक्षिणं तालं ततो हीनञ्च वामकम् ॥७३
कुर्वीत तद्द्वयं कार्य्यं[२] तर्जन्यङ्गुष्ठयोगतः।
वामहस्तस्थतालस्य मध्यमीषच्च नामितम्[३] ॥७४
तिर्यगदक्षिणतालस्य परिव्यंशेनं तालयेत्।
तालाङ्कंवादयेच्चैव[४] प्लुतदीर्घलघुद्रतैः ॥७५

इति करतालः।

इतरेषां लक्षणं विस्तरभयादुपेक्षितम्।

**किञ्च—**

ततं वाद्यञ्च देवानां गन्धर्वाणाञ्च शौषिरम्।
आनद्ध राक्षसानाञ्च मानवानां घन विदुः ॥७६

इति श्रील नरहरि-चक्रवर्तीना ( घनश्यामदासेन वा ) संगृहीते सङ्गीतसारसंग्रहे वाद्य-निर्णयाख्यो द्वितीयोऽध्यायः ॥२॥

१। समाकृतिं ?
२। धार्यः ?
३। 'मध्यमं सन्निनादितम्' वा पाठः।
४। 'तालादौ वादयेष्ठैव' इति वा पाठः।

## तृतीयोऽध्यायः

### नृत्य-नाट्य-प्रकरणम्

तत्रादौ नाट्यवेदोत्पत्तिमाह—

अथ क्रमप्राप्तं नृत्यमाह ।

इहानुश्रूयते ब्रह्मा शक्रेणाभ्यर्थितः पुरा ।
चकाराकृष्य वेदेभ्यो नाट्यवेदञ्च पञ्चमम् ॥१
भरताय ददौ पूर्वं नाट्यवेदं चतुर्मुखः ।
स नाट्य-नृत्य-नृत्तानि शम्भोरग्रे प्रयुक्तवान्[१] ॥२

तत्र च—

नर्त्तनं त्रिविधं नाट्यं नृत्यं नृत्तमिति क्रमात् ॥३

तत्र नाट्यं यथा—

योऽयं स्वभावो लोकस्य नानावस्थान्तरात्मकः ।
सोऽङ्गाभिनयनैर्युक्तो नाट्यमित्युच्यते बुधैः ॥

अपरञ्च—

नाटकस्थित-वाक्यार्थ-पदार्थाभिनयात्मकम् ।
तदाद्यं[२] भरतेनोक्तं रसभाव-समन्वितम् ।
नाटकादिषु तन्नूनमुपयुक्तं मुनीश्वरैः ॥५

१। तथा दामोदरे—
उपवेदोऽथ वेदाश्च चत्वारः कथिताः स्मृतौ ।
तत्रोपवेदो गान्धर्वः शिवेनोक्तं स्वयम्भूवे ॥
तेनापि भरतायोक्तस्तेन मर्त्ये प्रचारितः ।
शिवाब्जयोनिभरतास्तस्मादस्य प्रयोजकाः ॥

२। 'तच्चाद्यौ' वा ।

अथ नृत्यम्—

देशरीत्या प्रतीतो यस्ताल-मान-लयाश्रितः ।
सविलासाङ्गविक्षेपो नृत्यमित्युच्यते बुधैः ॥६

विलासो यथा—

नायकालोकनादौ तु[1] विशेषो हि क्रियासु यः ।
शृङ्गारचेष्टासहितो विलासः स निगद्यते ॥७

नृत्तमाह—

गात्रविक्षपमात्रन्तु सर्वाभिनय-वर्जितम् ।
आङ्गिकोक्तप्रकारेण नृत्तं नृत्यविदो विदुः ॥८
एनत्त्रयं द्विधा प्रोक्तं मार्गदेशीतिभेदतः ॥९

तत्र मार्गमाह—

ब्रह्माद्यर्मार्गितं शम्भोः प्रयुक्तं भरतादिभिः ।
गान्धर्वं वादनं नृत्यं यत् स मार्ग इति स्मृतम्[2] ॥१०

देशीमाह—

देशे देशे नृपादीनां यदाह्लादकरं परम् ।
गानं वाद्यं तथा नृत्यं तद्देशीत्युच्यते बुधैः ॥११

कोहलेन तु भिन्नतयोक्तम्—

अतःपरं प्रकक्ष्यामि नाट्यनृत्य-विकल्पनम् ।
नटस्यातिप्रवीणस्य कर्मत्वान्नाट्यमूच्यते ॥१२
मार्गो देशीति नाट्यस्य भेदद्वयमुदीरितम् ।
ब्रह्मणा यत्तपस्तप्त्वा मार्गितं शिवयोः पुरा ॥१३
मार्गनाट्यन्तु तत् प्राहुस्तच्च विंशतिधोच्यते ।
नाटकञ्च प्रकरणं भाणः प्रहसनं डिमः ॥१४

---

१। 'नायकालोकनादिषु' वा ।
२। स्मृतः ?

व्यायोगसम्वकारौ च वीथ्यङ्केहामृगा इति ।
रूपकाणि दशैतानि शङ्करेण वभाषिरे ॥१५

... ..नाटिका[1] प्राकरणिका हासिका ततः ।
वियोगिणी च डिमिका कलोत्साहवती पुनः ॥१६

चित्रा जुगुप्सिता चैव विचित्रार्थेति दुर्गया ।
एवं मार्गं नाटचमुक्तं शिवाभ्यां ब्रह्मणे पुरा ॥१७

दन्तिलादिभिरुक्तानि देशीरूपाणि षोड़श ।
षट्टकं त्रोटकं गोष्ठी वृन्दकञ्च ततःपरम् ॥१८

शिल्पकं प्रेक्षणं संलापकञ्चेति ततःपरम् ।
हल्लीसं वामिकां दुर्लङ्घ्रकं श्रीगदितं तथा ।
नाटचरसिकदुर्मल्ली प्रास्थानं काव्यलासिका ।१९

इति षोड़श देशीरूपाणि ।

अथ नृत्यमाह—

नृत्तानि द्वादशोक्तानि डोम्बिकाभिनिक तथा ।
भाणकः प्रस्थानकश्च लासिका [illegible]कस्तथा ।।२०

दुर्मल्लिका विदग्धश्च शिल्पिनी हण्डिनी तथा ।
भिन्नकी तिन्दुकी चैवं द्वादशोक्तानि सूरिभिः ॥२१

एषामलङ्कारशास्त्रे लक्षणं वहुधोदितम् ।
न [illegible]ग्रहणीस्तस्माज्ज्ञेयं नालेखि तन्मया ॥२२

१। एके तु चतुर्भिरङ्कैरुत्पाद्यं
तिसृभिर्नृपनायकम् ।
यत् कैशिकीरसप्रायं
नाटकं सैव नाटिका ॥
—दामोदरः

प्रकृतमनुस्रियते—

ताण्डवं लास्यमित्येतद्द्वयं द्वधा निगद्यते ॥२३

( द्वयं नृत्यं नृत्तञ्च )।

तत्र ताण्डवं यथा—

वर्द्धमानासारिताद्दैर्गीतिस्तत्र ध्रुवायुतम्।

करणैरङ्गहारैश्च प्राधान्येन प्रवर्त्तितम् ॥२४

तण्डूक्तमुद्धतप्रायं प्रयोगं ताण्डवं विदुः ॥२५

तण्डुर्नाम शम्भोर्गण-विशेषः। करणाङ्गहारौ वक्ष्येते। वद्धमानो वाद्यविशेषः। सारिका यवनिकाविशेषः।

ध्रवालक्षणन्तु नाटचदर्पणे—

प्रथयति पात्रविशेषं, सामाजिक-मनांसि रञ्जयति।

अथ संवध्नाति रसं, नाटचविशेषे ध्रुवा-गीतिः ॥२६। इति

प्रेरणिर्वहुरूपञ्चेत्येवं स्यात्ताण्डवं द्विधा[1] ॥२७

( प्रेरणिताण्डवं वहुरूपताण्डवञ्चेति द्विधात्यर्थः )

तत्र प्रेरणिर्यथा—

अङ्गविक्षेप-वाहुल्यं तथाभिनय-शून्यता।

यत्र सा प्रेरणी प्रोक्ता संज्ञा देशीति लोकतः[2] ॥२८

वहुरूपं यथा दामोदरे—

छेदनं भेदनं यत्र वहुरूपा मुखावली।

ताण्डवं वहुरूपञ्च तद्वानीगतमुद्धतम्[3] ॥२९

---

१। 'पेवलिर्वहुरूपञ्च ताण्डवं द्विविधं मतं'—इति सङ्गीतदामोदरे। शब्दकल्पद्रुमेऽपि द्रष्टव्यम्।

२। 'यत्र सा पेवलिस्तस्याः संज्ञा देशीति लोकतः'—इति दामोदरे।

३। इति हस्तलिखिते मूले। 'तद्वारुणानगमुद्धतं' अथवा 'तद्वारुणागलमुद्धतं' इति वा पाठः (?)।

सङ्गीतकौमुदी-सङ्गीतसारयोस्तु वहुरूप-लक्षणमन्यथा दृश्यते—

तेनागीतकवाद्यपात्र-सहितं युक्तं परावृतक-
यद्वद्द्भुत-संयुतं निगदितं यत् सूत्रद्वारेण च।
स्यादाश्चर्य्यकरं तु वीररसगं श्रृङ्गारगं वा बुधैः
प्रोक्तं तद्वहुरूपकं बहुविधैर्भाषारसः संयुतम् ॥३०

अथ लास्यमाह —

लास्यन्तु सुकुमाराङ्गं मकरध्वज-वर्द्धनम्।
स्फुरितं यौवतञ्चेति तदपि द्विविधं मतम् ॥३१
( स्फुरितलास्यं यौवतलास्यञ्चेति द्विविधमित्यर्थः )

स्फुरितमाह—

यत्राद्येऽभिनये भावैः रसैराश्लेष-चुम्वनैः।
नायिका-नायकौ यत्र[1] नृत्यतः स्फुरितं हि तत् ॥३२

(स्फुरितमित्यत्र छुरितमिति चवर्गद्वितीयादिमपि केचित् पठन्ति, आद्ये प्रधाने रसैः रसजनकैर्भावैश्चेष्टितैरित्यर्थः। आश्लेष-चुम्वनरिति आश्लेष आलिङ्गनं वहुवचनमाद्यर्थम्, आलिङ्गन-चुम्वनादिरतिभिरित्यर्थः। आश्लेपचुम्वनैरिति केचित्. तन्न, रङ्ग आश्लेषादेरदर्शनीयत्वात्. तदपि वक्ष्यते।)[2]

यौवतलास्यमाह—

मधुरावद्धलीलाभिर्नटीभिर्यत्र नृत्यते।[3]
वशीकरण-विद्याभं तल्लास्यं यौवतं मतम् ॥३३

---

१। 'नायिका-नायकश्चैव वा।

२। छुरितं यौवतञ्चेति लास्यं द्विविधमुच्यते।
यत्राभिनयाद्यैर्भावै रसै राश्लेषचुम्वनेः।
नायिका-नायकौ-रङ्गे नृत्यतश्छुरितं हि तत्।
—इति सङ्गीतदामोदरे

३। मधुरं बद्धलीलाभिर्नटीभियत्र नृत्यते।
—इति सङ्गीतदामोदरे

किञ्च—

लिङ्गीरित्यादि-लास्याङ्गान्यन्यान्युक्तानि सूरिभिः ।
नातिप्रयोजनानीति न मयोक्तानि तानि हि ॥३४

नृत्तमाह—

नृत्तञ्चापि त्रिधा प्रोक्तं विषमं विकटं लघु ।
( [illegible] त्तं, विकटनृत्तं लघुनृत्तञ्चेति त्रिविधम् )
विपम तत समुद्दिष्ट यद्रज्जुभ्रमणादिकम् ॥३५
विरूप-वेशावयव-व्यापारं विकटं मतम् ।
उपेतं करणैरल्परञ्जिताद्यैर्लघु स्मृतम् ॥३.

अञ्जितादि करणविशेषः, स च वक्ष्यति, कोहलोक्ता नृत्त-विशेषा डोम्बिका-भाणिकादयस्तूक्ता एव ।

सङ्गीतनारायणे नारदसहितायान्तु—'पुंनृत्यं ताण्डव प्रोक्त[1] स्त्रीनृत्यं लास्यमुच्यते' इति साधारण्येनोक्तम् । किञ्च, प्रेरणि[2]-वहु-रूपत्वेन ताण्डवस्य द्वैविध्यं, स्फुरित-यौवतरूपतया लास्यस्य द्वैविध्यञ्च भरतकोहलादि-प्राचीनाचार्य्यैराधुनिकै शार्ङ्गदेवादिभिरपि न लिखितम् । किञ्च—

'प्रकारनाटचमित्याहु र्यद्रासक्रीड़नादिकम्' इति सङ्गीत-कौमुद्यां ततसारेप्येव दृश्यते ।

तदप्याधुनिकैर्नाटयाचार्य्यैरङ्गीकृतं यतः ।
जनानुरञ्जनाद्धेतोमया तदपि कथ्यते ॥३७

तद्यथा [ काष्ठानृत्यम् ]—

अष्टाभिर्गोपनारीभिरष्टभिः कृष्णमूर्त्तिभिः ।
काष्ठानृत्यं प्रभवति कृत-स्वस्तिकमङ्गलम् ॥३८

इति काष्ठानृत्यम् ।

१ । प्राहुर्वा । २ । पेवलिः ?

[ जाकड़ीनृत्यम् ]—

पिच्छगुच्छकरौ पानमत्तौ गीत्वा स्वभाषया।
तुरुष्कौ नृत्यतो यत्र तन्नृत्यं जाकड़ीति च ॥३९

इति जाकड़ीनृत्यम्।

[ शवरनृत्यम् ]—

नृत्यन्ति शवरा यत्र गायन्तो निजभाषया।
तदिदं शावरं नृत्यमित्याहुर्नृत्यकोविदाः ॥४०

इति शावरनृत्यम्।

[ करञ्जी नृत्यम् —

शवरीवेशयो र्गुञ्जापुञ्जभूषणयोः स्त्रियोः।
नृत्यं करञ्जीति विदुर्गायन्त्योश्च स्वभाषया ॥४१

इति करञ्जीनृत्यम्।

[ म ावलीनृत्यम् ]—

मत्तानाञ्च तुरुष्काणां मदिरास्वादनानन्तरम्।
यः प्रकारस्तेन नृत्यं विदुर्मत्तावलीं बुधाः ॥४२

इति मत्तावलीनृत्यम्।

इति प्रकारनाट्यानि प्रोक्तान्याधुनिकैः पुनः
देशे देशेऽप्येवमेव देशीनृत्यं तथोह्यताम् ॥४३

तदुक्तं कौमुद्यां —

यस्मिन् देशे च या रीतिर्या च भाषा मनोहरा।
तयापि नृत्यं भवति प्रभूणां चित्तरञ्जनम् ॥४४

इति संक्षेपः।

अथ नाट्यशाला-सभानिवेशन-सभासद-पात्रलक्षण-वेशादीनि विस्तर-भिया नोक्तानि।

इति श्रील नरहरि-चक्रवर्तीना ( घनश्यामदासेन वा ) संगृहीते सङ्गीतसारसंग्रहे नृत्य-नाट्य-निर्णयाख्यो तृतीयोऽध्यायः ॥३॥

——o——

## चतुर्थोऽध्यायः

### आङ्गिकाभिनय-प्रकरणम्

॥ अथाङ्गहाराः ॥

निर्विक्तोङ्गैरभिनयो वुधैराङ्गिक ईर्य्यते ।
तत्राङ्गानां प्रधानत्वात्तान्युच्यन्ते समासतः ॥१

तत्राङ्गानामुपाङ्गानां प्रत्यङ्गानां निरूपणम् ।
यथामतीह क्रियते शार्ङ्गदेवादि-सम्मतम् ॥२

सप्ताङ्गानि शिरोऽंसोरः पार्श्वहस्त-कटी-पदम् ।
प्रत्यङ्गानि नव ग्रीवा-वाह्वंस-मणिवन्धकौ ॥३

पृष्ठोदरोरुजङ्घाश्च जानुनी भूषणानि च ।
द्वादशोपाङ्गानि मूर्ध-दृक्-तारा-भृकुटीमुखम् ॥४

नासे निःश्वासचिवुके जिह्वा-गण्ड-रदाधराः[1] ।
मुखरागमुपाङ्गेषु शार्ङ्गदेवो गृहीतवान् ॥५

करयोस्तलमङ्गुल्यः करभावपि केचन ।
क्षेत्रप्रचार-करणकर्माणि करयोरपि ॥६

पदोरुचोरुपाङ्गानि पार्ष्णिगुल्फतलाङ्गुलिः ।
वक्षसस्तुस्तनौ पार्श्वे कटचोरप्येवमूहयेत् ॥७

सङ्गीतदामोदरे तु भिन्नमाह शुभङ्करः, यथा—

शिरः करोऽथ हृदयं जठरं पार्श्वयुग्मकम् ।
कटिश्चेति षड़ङ्गानि कथितानि शरीरिणाम् ॥८

स्कन्धो वाहुः कुर्परश्च मणिवन्धः कराङ्गुलिः ।
ऊरू जान्नू च जङ्घे च चरणे च तदङ्गुलिः ॥९

१। 'जिह्वागण्डरदाधरान्' वा ।

प्रत्यङ्गानि दशैतानि कथितानि मनीषिभिः।
केश-स्तस्नौ च धम्मिल्लो ललाटो भ्रुयुगन्तथा ॥१०
चक्षुश्च नेत्रकोणश्च दृष्टिस्तारा श्रुतिस्तथा।
शङ्ख-गण्डौ हनुर्नासा कपोलोष्टोदराण्यपि ॥११
निश्वास-जिह्वे चिबुकं मुखं तद्राग एव च।
ग्रीवा चेति त्रयोविंशत्युपाङ्गानि विदुर्बुधाः ॥१२

अथाङ्गानि। तत्रादौ शिर आह—

धूतं विधूतमाधूतमवधूतञ्च कम्पितम्।
आकम्पितोद्वाहिते च परिवाहितमञ्चितम् ॥१३
निकुञ्चितं परावृत्तमुत्क्षिप्ताधोमुखे तथा।
लोलितञ्चेति विज्ञेयं चतुर्दशविधं शिरः ॥१४

दामोदरे—

आकम्पितं कम्पितञ्च धूतं विधूतमेव च।
परिवाहितमाधूतमवधूतं तथाञ्चितम् ॥१५
निकुञ्चितं परावृत्तमुत्क्षिप्तञ्चाप्यधोगतम्।
लोलितं प्रकृतिञ्चेति[1] चतुर्दशविधं शिरः ॥१६
लक्षणं विनियोगश्च यथोद्देशमुदीर्य्यते।
क्रमेण शनकैस्तिर्य्यक् धूतमुक्तं धूतं शिरः।
प्रतिषेधेऽलिप्सिते च विषादे विस्मये भवेत् ॥१७

इति धूतम्। (१)

धूतमेव भवेच्छीघ्रभ्रमणाद् विधूतं शिरः।
शीतार्त्ते ज्वरिते भीते सद्यःपातासवे त्विदम् ॥१८

इति विधूतम्। (२)

---

१। प्रकृतञ्चेति ?

आधूतञ्च सकृत्तीर्य्यगूर्ध्वनीतं शिरः स्मृतम् ।
गर्वेण स्वाङ्गवीक्षायां पार्श्वस्थोर्द्ध-निरीक्षणे ।
शक्तोऽस्मीत्यभिमाने च योज्यमङ्गीकृतावपि ॥१९

इति आधूतम् । (३)

यदधः सकृदानीतमवधूतं तदुच्यते ।
स्थित्यर्थदेश-निर्देशे आलापादानयोरपि ।
उपविष्टाल्पनिद्रायां संज्ञायाञ्च प्रयुज्यते ॥२०

इति अवधूतम् । (४)

वहुशः शीघ्रमूर्ध्नोऽधः कम्पना कम्पितं शिरः ।
ज्ञानेऽभ्युपगमे रोषे वितर्के तर्जने भवेत् ॥२१

इति कम्पितम् (५)

कम्पितं द्विःप्रयुक्तञ्चेन्मन्दमाकम्पितं भवेत् ।
पुरस्थवस्तु-निर्देशे चित्तस्थार्थ-प्रकाशने च॥२२

इति आकम्पितम् (६) ।

सकृदूर्द्ध्वं शिरो नीतमुद्वाहितमितीरितम् ।
शक्तोऽहमिह कार्य्येऽस्मीत्यभिमाने प्रयुज्यते ॥२३

इति उद्वाहितम् (७) ।

शिरसो मण्डलाकार-भ्रमणात् परिवाहितम् ।
विचारे विस्मये हर्षे स्मिते क्रोधेऽनुमोदने ॥२४

इति परिवाहितम् । (८)

किञ्चित् पार्श्वनत-ग्रीवं ज्ञेयं मस्तकमञ्चितम् ।
रुक्चिन्तामोहमूर्छासु तत्कार्यस्यानुधारने[1] ॥२५

( अनुधारणन्तु शिरोमणौ दृश्यते )

इति अञ्चितम् (९)

---

१ । अनुधावने ?

उत्क्षिप्य वाहुशिखरं मग्नग्रीवं निकुञ्चितम् ।
विलासे ललिते गर्वे बिब्बोके किलकिञ्चिते ।
मोट्टायिते कुट्टमिते माने स्तम्भे च तद्भवेत् ॥२६

( विलासादिकन्तु अलङ्कारशास्त्रे प्रसिद्धम )

इति निकुञ्चितम् । (१०)

पराङ्मुखीकृतं शीर्षं परावृत्तमितीरितम् ।
तत्कार्य्यं कोप-लज्जादिकृते वक्तापसारिणे ।
परावृत्तानुकरणे पृष्टतः प्रेक्षणे तथा ॥२७

इति परावृत्तम् । (११)

ऊर्ध्ववक्त्रं शिरो ज्ञेयमुत्क्षिप्तं तत् प्रयुज्यते ।
दर्शने तुङ्गवस्तूनां चन्द्रादि व्योमगामिनाम् ॥२८

इति उत्क्षिप्तम् । (१२)

लज्जा-दुःख-प्रणामेषु स्याद्यथार्थमधोमुखम् ॥२९

इति अधोमुखम् । (१३)

शिरः स्याल्लोलित मन्द सर्वत्र....लोलनात् ।
निद्रागद-ग्रहावेश-मद-मूर्छासु नन्मनम् ॥३०

इति लोलितम् । (१४)

किञ्च—

सम-पाराति-किंतिर्य्यक्स्कन्धानतोन्नते ।
पार्श्वाभिमुखमित्यन्ये भेदान् पञ्चापरे जगुः ॥३१
एषूच्यते समंतूक्तान्तर्गतत्..न्न चापरे ।
निर्विकारं स्वभावस्थं शिरः सममुदीर्य्यते ।
तच्च पूजा-जप-ध्यान-स्वामिसेवादिषु स्मृतम् ॥३२

इति शिरः ।

अथांसौ—

एकोच्चौ कर्णलग्नौ[1] चोच्छ्रितौ स्रस्तौ च लोलितौ ।
इत्युक्तौ पञ्चधा स्कन्धौ नाम्नैव व्यक्त-लक्षणौ ।।३३
एकोच्चौ कथितौ स्कन्धौ मुष्टि-कुन्तप्रहारयोः[2] ।।३४
इति एकोच्चौ ।

अन्येषां लक्षणं नोक्तम् ।

अथोरः—

स्याद्वक्षः सममाभुग्नं निर्भुग्नञ्च प्रकम्पितम् ।
उद्वाहितं पञ्चधेनि तेषां लक्ष्माभिदध्महे ।।३५
मौष्ठवाधिष्ठितं वक्षश्चतुरस्राङ्ग-सश्रयम् ।
प्रकृतिस्थं समं प्राहुः स्वभावाभिनये समम् ।।३६
इनि समम् ।

निम्नं शिथिलमाभुग्नं वक्षः स्याद्धर्ष-लज्जयोः ।
शीत्कृत-शल्ययोः शोके मूर्छाभी-संभ्रमेषु च ।
कार्य्यं व्याधौ विपादे च ब्रूने शङ्कर-किङ्करः ।।३७
इनि आभुग्नम् ।

विस्तरभयान्नोक्तमन्येपा लक्षणम् ।

अथ पार्श्वम्—

विवर्तितं चापसूत[3] प्रसारितमथो नतम् ।
उन्नतञ्चेति सचख्युः पार्श्वं पञ्चविधं बुधाः ।।३८

१। 'लग्नकर्णौ' वा ।

२। भक्तिरत्नाकरे किञ्चिदधिको पाठ.—"आश्लेषे शिशिरे चासौ... डुकावाद्यवादने" (३२४१) इति द्रष्टव्यम् ।

३। चापसूत्रं ?

विवर्त्तनात्त्रिकस्य स्यात् परावृत्ते विवर्त्तितम् ॥३९
( त्रिकस्य पृष्ठदेशस्येत्यर्थः। पृष्ठवंशाधरे त्रिकमिति। )
इति विवर्तितम्।

नोक्तमन्येषां लक्षणम्।

॥ अथ हस्तः ॥

असंयुताः संयुताश्च नृत्यहस्ता इति त्रिधा।
हस्तकाः कथितास्तज्ज्ञैः सामान्या नृत्यभेदतः[१] ॥४०

दामोदरे—

असंयुताः कियन्तोऽपि कियन्तः संयुताः परे[२]।
नृत्यहस्ताः कियन्तः स्युरित्थं हस्तास्त्रिधा मताः ॥४१
हस्तेनैकेन कर्माणि येषां ते स्युरसंयुताः।
येषां हस्तद्वयेनैव कर्माणि ते तु संयुताः[३] ॥४२
नृत्यमात्र-स्थिता ये तु न किञ्चिद्वस्तुवाचिनः[४]।
अङ्गहारेण सहिता नृत्यहस्तास्तु ते मताः ॥४३
उत्तानः पार्श्वगश्चैव तथाधोमुख एव च।
हस्त-सञ्चारस्त्रिविधो भरतेन प्रकीर्त्तितः ॥४४

क्वचित्तु—

उत्तानोऽधस्तलः पार्श्वतलो हस्तोऽग्रतस्तलः।
सुसमुख्यतलश्चोर्द्ध मुखोऽधोवदनस्तथा ॥४५
परांङ्मुख-सम्मुखश्च हस्तोऽन्यः पार्श्वतोमुखः।
ऊर्द्धगोऽधोगतः पार्श्वगतो हस्तस्तिरोगतः ॥४६

---

१। सामान्यनृत्यभेदतः ?
२। 'संयुतापरे' वा।
३। 'कर्म ते स्युस्तु संयुता' इति वा पाठः।
४। 'किञ्चिद्वस्तुवाचकाः' इति वा पाठः।

सम्मुखागत इत्याहुर्हस्तान् पञ्चदशापरे ।
पञ्चषंत्यपरे प्राहुस्ते-त्वत्रान्तर्भवन्ति हि ॥४७

तत्र क्रमप्राप्तासंयुतानाह—

पताकस्त्रिपताकोर्द्धचन्द्राख्यः कर्त्तरीमुखः ।
अरालमुष्टि-शिखर-कपित्थ-खटकामुखाः[१] ॥४८
शुकतुण्डः काङ्गुलश्च पद्मकोषोऽथ पल्लवः ।
सूचीमुखः सर्पशिराश्चतुरो मृगशीर्षकः ॥४९
हंसास्यो हंसपक्षश्च भ्रमरो मुकुलस्तथा ।
ऊर्णनाभश्च सन्दंशस्ताम्रचूड़ोऽपरः करः ॥
अमी असंयुता हस्ताश्चतुर्विंशतिरीरिताः ॥५०
उपधानः सिंहमुखः कदम्बश्च निकुञ्चकः ।
असंयुतेषु चतुरोऽधिकानेतान् परे जगुः ॥५१
त्रिंशद्दामोदरेणोक्ता अमी हस्ता असंयुताः[२] ;
असंयुता अर्थवशादेते स्युः संयुता अपि ॥५२

---

१। खटकामुखाः ?

२। शुभङ्कर-निर्मितयोः सङ्गीतदामोदर-हस्तमुक्तावल्योरसंयुता हस्ता यथा—

असंयुतानां हस्तानामुद्देशः क्रियतेधुना ।
शुभङ्करेण कविना नानाभिमयशालिना ॥
पताकः पद्मकोशश्च हंसास्यः कर्त्तरीमुखः ।
अल्पद्मस्त्रिपताको मुष्टिकः शिखरस्तथा ॥
अर्धचन्द्रः सर्पशिराः सूच्यास्यः खटकामुखः ।
अरालः शुकतुण्डश्च सन्दंशः काङ्गुलस्तथा ॥
ऊर्णनाभोऽपि कथितः कपित्थो मृगशीर्षकः ।
हंसपक्षस्ताम्रचूड़श्चतुरो मुकुलस्तथा ॥
भ्रमरश्च कदम्बश्च कृष्णसारमुखाह्वयः ।
घ्रोणिकोऽप्यथ सिंहास्योऽङ्कुशस्तन्त्री मुखस्तथा ।
इत्येते कथिता हस्ता मया त्रिंशदसंयुता ॥

॥ अथ हस्तप्रयोगाः ॥

किञ्च—

पताक-प्रकृतित्वेन वहुहस्तो भवेत्ततः ।
विनियोग·व त्वाच्च प्रथमं स निगद्यते ॥५३
अङ्गुष्ठो यस्य वक्रः सन् तर्जनीमूल-संश्रितः ।
ऋजवोऽङ्गुलया शिष्टाः स पताक इति स्मृतम्[१] ॥५४
।प स्पर्शे च पेटे च पताका तालिकादिषु ।
ज्वालास्वर्द्धगतास्तस्याङ्गुल्यः प्रविरलाश्चलाः ॥५५
धारास्वधो गता पक्षिपक्ष तस्य कटिस्थितिः ।
ऊर्ध्वं गच्छन्नुच्छ्रितेषु पुष्कर-ग्रहणे त्वधः ॥५६
ऊर्द्ध्वं गच्छन् कटिक्षेत्रात् उत्क्षेपाभिनये करः ।
आभिमुख्ये मुखक्षेत्रमागच्छन्निजपार्श्वतः ॥५७
कम्प्रः पार्श्वे निषेध च पार्श्वे विभजने पृथक् ।
पताकञ्च शनैर्घर्षोन्मर्दने मार्जने तथा ॥५८
शिलादिस्थूलवस्तूनां धारणोत्पाटनादिषु ।
उच्छ्रितौ विच्युतौ[२] कार्य्यावितावन्योन्यसम्मुखौ ॥५९
अधोगतोच्छ्रित-तलाङ्गुलिर्वायूर्मिवेगयोः ।
सरःपल्लल निर्देशौ स्वस्तिकीभूय विच्युतौ[३] ॥६०
कार्य्य पताको विश्लिष्ट स्वस्तिकाकारतां गतौ ।
छदने गोपनादर्श-वाचने प्रोञ्चनेषु च ॥६२
अधोमुखौ तालतलौ हस्तौ किञ्चित् प्रसारितौ ।
कृत्वा प्रदर्शयेद्वेलां विलं ग्राहं गृहं गुहम्[४] ॥६६

१। स्मृतः ?
२। उच्छ्रितौ उच्चगतौ, विच्युतौ विच्छेदे इत्यर्थः ।
३। विच्युता ?
४। शुभङ्कर-निर्मिते हस्तमुक्तावलीग्रन्थेऽपि द्रष्टव्यम् ।

यद्यपि निर्विशेषेण हस्तप्रयोगा उक्ताः तथापि लोकप्रयुक्तिमनु-सृत्यैव प्रयोज्यम्। तदुक्तं—

लोकप्रयोगमुद्वीक्ष्य नाटयाङ्गमुपजीव्य च।
तत्तच्चेष्टानुसारेण हस्तकान् संप्रयोजयेत् ॥६४
घर्षणच्छेदनादर्श-विभागादौ स्फुटं हि तत् ॥६५
इति पताकः।

पताकस्त्रिपताकः स्याद् वक्रिता चेदनामिका।
एष दध्यादि-माङ्गल्यद्रव्यस्पर्शे प्रयुज्यते ॥६६
पराङ्मुखः स्यादाह्वाने लग्नद्व्यङ्गुलि-कुञ्चनात्।
कर्त्तव्योऽसौ पार्श्वतले नमस्कारे शिरोगतः ॥६७
अस्रे तन्मार्जने तस्मादधो यान्तीमनामिकाम्।
नेत्रक्षेत्रगतां विभ्रत्तिलके तु ललाटगाम् ॥६८
समुत्तानाङ्गुलियुगो वदनोन्नमने भवेत्।
सन्दोहेऽङ्गुलियुग्मन्तु क्रमात् कार्य्यं नतोन्नतम् ॥६९
वहिःक्षिप्ताङ्गुलिद्वन्द्वोऽधस्तलोऽनादरोज्झिते।
मूर्ध्नोऽन्नधोमुखः कार्यो भ्रमन्नुष्णीष धारणे ॥७०
तादृशो मस्तकादूर्ध्वं कार्यो मकुट-धारणे।
पक्षिस्त्रोतोऽनिलेपूर्ब्वमधस्तिर्य्यग् व्रजन् क्रमात् ॥७१
कटिक्षेत्रगतो बिभ्रदधांसुग्यचलाङ्गुली।
अलकस्यापनयने ललाटादलकाश्रितः ॥७२
दुर्गन्धे दुर्व्वचसि च दुःशब्द-श्रवणेऽपि च।
अङ्गुलिभ्यां क्रमात् कुर्वन् नासास्यश्रोत्र-संवृति ॥७२
उत्तानाधोमुखान्योन्याग्रसंश्लिष्टे विवाहने।
अधोमुख-स्वस्तिकौ तु गुरूणां पादवन्धने[1] ॥७३

१। पादवन्दने वा।

भालस्थौ स्वस्तिकौ कार्य्यौ विच्युतौ नृपदर्शने ।
तिर्य्यग्विशिष्ट-सम्बन्धौ स्यातां तौ गृहदर्शने ॥७४
तपस्विदर्शने कार्य्या वृद्धौ चापि पराङ्मुखौ ।
परस्परस्याभिमुखौ कर्त्तव्यो दारदर्शने ॥७५
स्त्रियं नितम्बादास्कन्धं मध्यपार्श्वे व्रजं तनोः ।
उत्तानाधोमुखौ कार्य्याविग्रे वक्त्रस्य सम्मितौ ॥७६
वड़वानल-नक्राणां मकराणाञ्च दर्शने ।
सम्मुख-प्रसृताङ्गुष्ठ· कार्य्यौ वालेन्दुदर्शने ॥७७
पराङ्मुखोऽधोऽङ्गुष्ठस्तु रथ-तच्चक्रदर्शने ॥७८

इति त्रिपताकः ।

यस्याङ्गुल्यस्तु विनताः सहाङ्गुष्ठेन चापवत् ।
अर्द्धचन्द्राकृतिः सोऽयमर्द्धचन्द्राभिधः करः॥७९
असौ पराङ्मुखौ खेदे कपोलं फलकं दधत् ।
अन्योन्यसम्मुखौ तिर्य्यङ् मध्ये तु......संयुतौ ॥८०
साटङ्के कर्णगोलोक दृष्टचा निष्कासने वलात् ।
कङ्कणे मणिवन्धस्थो मण्डलाकारमाप्नुवत् ॥ १
असंयुतावूर्ध्वगनावुत्थितौ वालपादपे ।
शङ्खे तु तौ मुखान्तस्थौ पुरतोऽभिमुखौ घट ॥८२
मेखलाया कटि क्षेत्रगतो स्यातामधोमुखौ ॥८३

इत्यर्द्धचान्द्रः ।[1]

अन्येषां लक्षणं विस्तरभयान्नोक्तम् ।

इत्यसंयतहस्ताः

---

१ । तर्जन्यादिकनिष्ठान्ता यस्याङ्गुल्यो नतिं गताः ।
अङ्गुष्ठोऽपि ततः सोऽर्धचन्द्रः कोदण्डखण्डवत् ॥
—इति हस्तमुक्तावली

अथ क्रमप्राप्तं संयुतमाह—

अञ्जलिश्च कपोतश्च कर्कटः स्वस्तिकस्तथा ।
दोल-पुष्पपुटोत्सङ्ग-खटका-वर्द्धमानकाः ॥८४
गजदन्तश्चावहित्थो निषधो मकरस्तथा ।
वर्द्धमानश्चेति हस्ता संयुताः स्युस्त्रयोदश[१] ॥८५
पताक-हस्ततलयोः संश्लिष्टश्चेत्तदाञ्जलिः ।
नमस्कारे देवतानां शिरस्थोऽयमुदीरितः ॥८६
गुरूणान्तु नमस्कारे मुखक्षेत्रगतो भवेत् ।
नमस्कारे तु विप्राणां हृदिस्थः सद्भिरिष्यते ।
अन्येष्वनियमो ज्ञेयस्त्रिभिः कार्यो यथेप्सितम् ॥ ८७
इत्यञ्जलिः ।

मूलपार्श्वाग्रसंश्लिष्टौ विशिष्टौ तुलयोः करौ ।
स कपोतः केचिदेनं कूर्ममाहुर्मनीषिणः ॥८८
प्राङ्मुखो गुरु-सम्भाषे प्रणामे विनयेऽपि च ।
शिशिरे कम्पिते हृत्स्थः स्त्री-कापुरुषयोर्भये ॥८९
इति कपोतः ।

बाहुल्यभीतिनात्लक्षणमन्येषां नोक्तम् ।
इति संयुतहस्ताः ।

१ । संयुतानाञ्च हस्तानामुद्देशः क्रियतेऽधुना ।
गजदन्तः कपोतश्च वर्धमानाञ्जली तथा ।
निषधः कर्कश्चैव तथोत्सङ्गोऽवहित्थकः ॥
स्वस्तिको मकरो दोलस्तथा पुष्पपुटाभिधः ।
सरालश्च तथैवान्यः स्वटकावधमानकः ॥
चतुर्दशेति कथिताः संयुता हस्तका अमी ।
—इति दामोदरः हस्तमुक्तावलीश्च

अथ नृत्यहस्ताः—

चतुरस्रावथोद्वृत्तौ हस्तौ तेना (?) तल मुखाभिधौ ।
स्वस्तिकौ विप्रकीर्णावप्यवालखटकामुखौ[1] ॥९०
आविद्धवक्त्रौ सूच्यास्यौ रेचितार्द्धरेचितौ ।
नितम्बौ पल्लवौ केशवन्धावुत्तानवञ्चितौ ॥९१
लताख्यौ करिहस्तश्च पक्षवञ्चितकाभिधौ ।
पक्षप्रद्योतकौ दण्डपक्षौ गरुड़पक्षकौ ॥९२
ऊर्ध्वमण्डलिकौ हस्तौ पार्श्वमण्डलिनावपि ।
उरोमण्डलिनौ स्यातामुरःपार्श्वोर्द्धमण्डलौ ॥९३
मुष्टिकस्वस्तिकावन्यौ नलिनीपद्मकोशकौ ।
अलपद्मावुल्वणौ च वलितौ ललिताविति ॥९४
नृत्यहस्ता मताख्रिंशन्नृत्यमात्रोपयोगिनः ।
वरदा भयदावद्धचतुरस्राविति द्वयम् ॥९५
अन्यन् शिरोमणिः प्राह तते द्वात्रिंशदीरिता. ।
समानतुर्यस्कन्धौ वक्षसोऽष्टाङ्गुलान्तरौ ॥९५
प्राङ्मुखौ खटकावक्त्रौ[1] चतुरस्राभिधौ करौ ।
मञ्जनाहारस्रगादीनामेनावाकर्षणे स्तौ ॥९६

इति चतुरस्रौ ।

१। खटकामुखमिति—

अनामिका-कनीयस्यावुद्धिप्ते वक्रिते मनाक् ।
विरले तेन् कपित्थस्य तदा स्यात् खटकामुखः ।।

परशुरामसंहितायान्तु कराभ्यास-प्रकरणे—

तर्जनीमध्यमामध्ये पुंखोऽङ्गुष्ठेन पीड्यते ।
तस्मिन्ननामिकायोगात् स हस्तः खटकामुखः ॥ इति
उत्तानोऽसौ युगादौ स्याद्वस्त्रचामर-धारणे
कुसुमावचयेत्यादौ ।

समाभ्यां हंसपक्षाभ्यामुत्तानोऽधो व्रजत्यधः ।[१]
यदान्योऽधोमुखो वक्षस्तदोद्वृत्तौ करौ स्मृतौ ॥९७
तालवृन्तावाहुरेके तालवृन्त-निरूपणौ ।
प्राङ्मुखो हंसपक्षौ च व्यावृत्त-परिवर्त्तितौ ॥९
उद्वृत्तौ मेनिरे केचिज्जयशब्दे प्रयोजयेत् ॥९९

इत्युद्वृत्तौ ।

अन्येषां लक्षणं विस्तरभयादुपेक्षितम् ।

इति नृत्यहस्ताः ।

**अथ** कटिमाह[२]—

कम्पितोद्वाहितोच्छिन्ना विवृता रेचिता मता ।
कटी पञ्चविधा प्रोक्ता तल्लक्षणं व्याहरेऽधुना ॥१००
द्रुतं[३] (?) गतागते पार्श्वे दधती कम्पिता मता ।
तां कुब्जवामनादीनां गमने विनियुञ्जते ॥१०१

इति कम्पिता ।

अन्येषां लक्षणं नोक्तम् ।

**अथ** पदम्—

समोऽञ्चितः कुञ्चितश्च सूच्यग्रतल-सञ्चरः ।
मर्दितोद्घाटितौ चेत्यग्रगः पार्श्वग-पार्ष्णिगौ ।
ताड़ितोद्घट्टितोच्छेध उद्घाटित इति क्रमात् ॥१०२

---

१ । हंसपक्षमिति—
तर्जन्याद्याः पताकस्य निम्नोऽङ्गुल्यो नताः समाः ।
ऊर्द्ध्वा कनीयसी यत्र हंसपक्षः स उच्यते ॥
शुभङ्कर-निर्मिते हस्तमुक्तावलीग्रन्थेऽपि द्रष्टव्यम् ।

२ । समाच्छिन्ना विवृत्ता च रेचिता कम्पिता तथा ।
उद्वाहिता चेति कटिः षड्विधा परिकीर्तिता ॥
—सङ्गीतदामोदरः

३ । द्रुतं ?

त्रयोदशविधः प्रोक्तश्चरणो नृत्यकोविदैः ।
स्वभावस्थेन स्थितौ भूमौ समः पादोऽभिधीयते ॥१०३

स्वभावाभिनये कार्य्यो स्थिरोऽसौ रेचके चलः ॥१०४
इति समः ।

अन्येषां लक्षणं विस्तरभयान्नोक्तम् ।
इति सप्ताङ्गानि ।

अथ प्रत्यङ्गानि । ग्रीवा—

समा निवृत्ता वलिता रेचिता कुञ्चिताञ्चिता ।
त्र्यस्रा नतोन्नता चेति ग्रीवा नवविधा भवेत् ॥१०५
समा स्वाभाविकी ध्याने जपे कार्य्ये स्वभावजो ॥१०६
इति समा ।
अन्येषां लक्षण नोक्तम् ।

अथ वाहुः—

ऊर्द्धास्योऽधोमुखस्तिर्य्यगपविद्धः प्रसारितः ।
अञ्चितो मण्डलगतिः स्वस्तिकोद्वेष्टितावा ॥१०७
पृष्ठानुसारी सरलान्दोलितौ नम्रकुञ्चितौ ।
आविद्धोत्सारिताविव वाहुः षोड़शधोदितः ॥१०८
शीर्षाद्वर्द्ध व्रजन् वाहुरूर्द्धास्यस्तुङ्गदर्शने ॥१०९
इति ऊर्द्धास्यः ।
अन्येषां लक्षणं नोक्तम् ।
इति वाहुः ।

अथ मणिवन्धः—

निकुञ्चाकुञ्चित-चलासमोभ्रमित इत्ययम् ।
मणिवन्धः पञ्चविधो निकुञ्चस्तु स उच्यते ॥११०

यो वहिर्निम्नतां नीतः स्वदानाभयदानयोः ॥१११

इति निकुञ्चितः। अन्येषां नोक्तम् ।

इति मणिवन्धः॥

अथ पृष्ठोदरे—

पृष्ठन्तु जठरोक्ताभिर्वर्त्तनाभिविर्त्तते ।
अतो न तत्पृथग्वाच्यं जठरं तूच्यतेऽधुना ॥११२
क्षामं खल्लं तथा पूर्णं रिक्तपूर्णं चतुर्विधम्।
क्षामं स्यान्नमनाज्जम्भा-हास्य-निश्वास-रोदने ॥११३
निम्नं खल्लं क्षुधार्त्ते स्यादातुरे श्रम-कर्षिते ।
वेतालभृङ्गवाच्यादि-जठराकारधारिते ॥

अन्येषां लक्षणं वाहुल्यभयान्नोक्तम् ।

इत्युदरम् ।

अथ ऊरुः—

कम्पितो वलितः स्तब्धो वर्त्तितश्च विवर्त्तितः ।
इत्यूरुः पञ्चधा तत्र मुहुः पार्श्वे नतोन्नते ।
यस्यासौ कम्पितो ज्ञेयोऽधमानां गमने ततः ॥११४

इति कम्पितः। अन्येषां नोक्तम्।

इत्यूरुः ।

अथ जङ्घा—

आवर्त्तितानता क्षिप्तोद्वाहिता परिवर्त्तिताः ।
निसृता च परावृत्ता तिरश्चीना वहिर्गताः ॥११५
कम्पिता चेति दशधा जंघा नृत्यविदो जगुः ।
वामे दक्षिणतः पदे दक्षिणे वामतः कृते ।
मुहुरावर्त्तिता प्रोक्ता विदूषक-परिक्रमे ॥११६

अन्येषां लक्षणं नोक्तम्।

इति जङ्घा।

अथ जानु—

संहतं कुञ्चितं सार्द्धकुञ्चितं नतमुन्नतम् ।
विवृतं समिमित्यूचे जानु सप्तविध बुधैः ॥११७

रोपेर्ष्यादौ संहतं स्यात् जानु-निष्ठान्यजानु चेत् ॥ इति

इति जानु । अन्येषां नोक्तम् ।

अथ भूषणम् —

यत्तु[1] वेशयुषो भूषा भूषणं तु निगद्यते ॥११८

इति भूषणम्

इति नव प्रत्यङ्गानि[1]

॥ अथ शिरस उपाङ्गानि[2] ॥

तत्र प्रथमत दृष्टय —

दृष्टयस्त्रिधा स्थायिदृष्ट्यो रसदृष्टयः ।
दृष्टयो व्यभिचारिण्य उद्दिश्यान्तः क्रमादिमाः ॥११९

तत्र स्थायिदृष्टयः—

स्निग्धा हृष्टा च दीना च क्रुद्धा दीप्ता भयान्विता ।
जुगुप्सिता विस्मितेति दृष्टयः स्थायि-भावजाः ॥१२०

१ । तत्ते ?

२ । (क) प्रत्यङ्गानि सङ्गीतदामोदरे—

स्कन्धो बाहु कर्पूरश्च मणिबन्ध कराङ्गुली ।
ऊरू-जानुः । जङ्घा-चरणञ्च तदङ्गुली ।
प्रत्यङ्गानि एतानि कथितानि मनीषिभिः ॥

एतेषु प्रत्यङ्गेषु एकैकमप्यनेक प्रकारमिति ।

(ख) प्रत्यङ्गानि नन्दिकेश्वरो विरचिता अभिनयदर्पणे—

प्रत्यङ्गान्यथ य स्कन्धौ बाहू पृष्ठं तथोदरम् ॥
ऊरू जङ्घे षडित्याहुपपरे मणिबन्ध कौ ।
आनुसी कूर्परावेतत् त्रयमप्यधिकं जगुः ॥

मनाक्समुत्क्षिप्तैकभ्रूः साभिलाषा कटाक्षिणी ।
यद्गतागतिविश्रान्ति वैचित्र्येण विवर्त्तनम् ।
तारकायाः कलाभिज्ञास्तं कटाक्षं प्रचक्षते ॥१२१

विलासिनी दृष्टिरुक्ता स्निग्धेति रतिभावजा ।
अत्र भ्रुवोः समुत्क्षेपं शार्ङ्गदेव प्रभाषते ॥१२२

इति स्निग्धा ।

फुल्लगल्लाविशत्तारा किञ्चिदाकुञ्चिता चला ।
निमेषिणी स्मिताकारा हृष्टा दृष्टिरुदाहृता ॥१२३

इति हृष्टा ।

ईषत् श्लथोत्तर टानभिव्यवनो ताग रा ।
सवाष्पामलमञ्चारा दृष्टिर्दीनेति कथ्यते ॥१२४

इति दीना ।

स्थिरा वृत्तपुटां (?) रुक्षा किञ्चित्तरलतारकाम् ।
भ्रुकुटीकुटिला दृष्टिं क्रुद्धा ब्रूते हरिप्रिय ॥१२५

इति क्रुद्धा ।

स्थिरा विकशिता धैर्यमुद्गिरन्तीव या भवेत ।
दृष्टिरुत्तमाहिनी प्राहुस्तां दृप्तां भरतादय ॥१२६

इति दृप्ता ।

निर्गच्छन्निव यन्मध्यं सा स्यादविक्षिप्ततारका ।
विस्फारितोभयपुटा या सा दृष्टिभयान्विता ॥१२७

इति भयान्विता ।

अस्पष्टालोकिनी मीलत्तारका सङ्कुचत्पुटा ।
दृश्यं दृष्ट्वा समुद्विग्ना दृष्टिरुक्ता जुगुप्सिता ॥१२८

इति जुगुप्सिता ।

पुटविस्फारिताकार-पुटद्वन्द्वा विकाशिनी ।
निश्चला दृष्टिरुद्वृत्ततारकाद्विस्मिता स्मृता ॥१२९

इति विस्मिता ।

इत्यष्टौ दृष्टयः स्थायिभावजा लक्षिताः क्रमात् ।
एता एवोल्वणाः सन्त्यो जायन्ते रसदृष्टयः ॥१३०

ताः यथा—

कान्ता[1] हास्या च करुणा रौद्री वीरा भयानका ।
बीभत्सा चाद्भुता चाष्टौ विज्ञेया रसदृष्टयः ॥१३१

कन्दर्पवर्द्धिनी दृश्यमापिबन्तीव निर्मला ।
सभ्रूक्षेप-कटाक्षा या दृष्टिं कान्तोचितां विदुः ॥१३२

इति कान्ता ।

आकुञ्चिता पुटा तीव्रमध्यमन्यक्रमेण या ।
भ्रान्तान्तर्नीत-तारा च दृष्टिर्हास्येति सोच्यते ॥१३३

इति हास्या ।

पतितोर्द्ध्वपुटा सास्रा शोकमन्थर-तारका ।
नासाग्रानुगता दृष्टिः करुणा करुणे रसे ॥१३४

इति करुणा ।

---

१। शान्ता ?

स्तब्धतारोभयपुटा शोणा भ्रुकुटिभीषणा ।
उग्रातिधूसरा दृष्टिर्या सा रौद्रीति कथ्यते ॥१३५

इति रौद्री ।

अचञ्चला विकसिता गम्भीरा समतारका ।
तेजः शोभाविशेषात्तु सप्तभेदान् विवृण्वती ।
दीप्ता सङ्कुचितापाङ्गा वीरा दृष्टिरुदाहृता ॥१३

इति वीरा ।

स्तब्धोभयपुटात्यन्तवल्गमान-कणीनिका ।
ईषत् कुञ्चित-पक्ष्माग्राद्भुता दृष्टिरुदीर्यते ॥१३७

इत्यद्भुता ।

स्तब्धोद्वृत्तपुटात्यन्तचञ्चलोद्वृत्त-तारका ।
दृश्यात्पलायमानेव भीत्या दृष्टिर्भयानका ॥१३८

इति भयानका ।

वीभत्सा स्यान्मीलल्लोल-पक्ष्मा तरल-तारका ।
दृश्योद्वेगादिपाङ्गोच निकुञ्चित पुटोच्छिन्ना ॥१३९

इति वीभत्सा ।

शृङ्गार-प्रमुखेष्वेना रसेषु स्थायिदृष्टयः ।
जायन्ते व्यभिचारिण्यो लक्ष्यन्ते दृष्टयोऽधुना । १४०

ताश्च—

मलिना शङ्किता ग्लाना जिह्मा शून्या विषादिनी ।
लज्जिता मुकुला श्रान्ताभितप्ता कुञ्चिता तथा ॥१४१

आकेकरा विकोशार्द्रा मुकुला च वितर्किका ।
विभ्रान्ता विप्लुता त्रस्ता ललिता मदिरेति च ॥१४२

विंशतिर्व्यभिचारिण्यो दृष्टयः कथिता इमाः ।
दृश्यादपसृते तारे किञ्चिन्मुकुलितौ पुटौ ॥१४३

दधन्त्यपाङ्गौ विच्छायौ पक्ष्माग्र-स्यन्दनं तथा ।
दृष्टिः स्यान्मलिना स्त्रीणां विकृते सा प्रयुज्यते ॥१४४
( प्राप्ते कालेऽप्यसंलापः प्रियेण विकृतं मतम् )
इति मलिना ।

मुहुश्चला स्थिरपार्श्वा नो[illegible] [illegible] बहिर्मुखी ।
मूढावलोकिनी शीघ्रा[illegible] [illegible]लोकनात् ॥
शङ्कायां शङ्किता दृ[illegible]नता [illegible]कङ्कसुरि[illegible] ॥१४५
इति शङ्किता ।

विश्लथभ्रू-पक्ष्मपुटा मलिना मन्दचारिणी ।
अन्तर्निविष्टतारा या दृष्टिर्ग्लानेति सोच्यते ॥
एषा ग्लानावपस्मारे नियुक्ता भरतादिभिः ॥१४६
इति ग्लाना ।

इतरेषां लक्षणं बाहुल्यभयान्नोक्तम् ।
इति षट्त्रिंशद्दृष्टयः ।

अथ ताराभृकुटीमुखादयः सन्ति, विस्तरभयान्नोक्ताः ।
इति उपाङ्गानि ।

अथ नृत्याङ्गानि—

स्थानकानि तथाचारी करणं मण्डलं तथा ।
अङ्गहारश्च भरते (?)[1] नृत्याङ्ग पञ्चचादितम्[2] ॥१८७

एतेषु नृत्याङ्गेषु एकैकमप्यनेकप्रकारं भवतीति लक्षणं च वाहुल्यतया नोक्तम् ।

इति श्रील नरहरि-चक्रवर्त्तीना (घनश्यामदासेन वा) सगृहीत सङ्गीत-सारसग्रहे आङ्गिकाभिनयाख्यो चतुर्थोऽध्याय. ॥४॥

॥ शकाब्दा १ ७५ ॥

१ । भव ते ?

२ । (क) तत्र स्थानकानि यथा—

संहत समपादेञ्च स्वस्तिक वर्द्धमानक ।
*　　*　　*　　*
स्थानकानि. त्रयविंशदेवान्यस्मानि सूरिभि ॥

(ख) चारी यथा—

न हि चारी विना नृत्ये नृत्यमङ्गे प्रवर्त्तते ।
*　　*　　*　　*
षट्विंशतिर्भौमाचार्य्य इत्याख्याता मनीषिभि ॥

(ग) आकाशचारी यथा—

चारीस्त्वाकाशगा वक्ष्ये विक्षेपद्भ्रमरी तथा ।
*　　*　　*　　*
आकाशचारिका एता षाडशैव निरूपिता ॥

(घ) करण यथा—

करणान्नु सर्वेषा सामान्यलक्षण विद ।
*
तत्पुरापृटञ्चापि विक्षिप्त वलितोदितम् (?) ॥

(ङ) मण्डल यथा—

सग्राम-नृत्यनाट्येषु युद्धव्यायामयोस्तथा ।
मण्डलानि नियोज्यानि भौमान्तरीक्षभेदत ॥
*　　*　　*　　*

(च) अङ्गहार यथा—

..... तेष्वगजिताद्या स्युरङ्गहारास्तु षोडश. ।
—सङ्गीतदामोदरस्य चतुर्थस्तवके द्रष्टव्यम् ।

# पञ्चमोऽध्यायः

## भाषादि-निरूपणम्

॥ श्रीकृष्णाय नमः ॥

अत्र भाषादि-नियममाह—

> प्रकृतिः संस्कृतं तत्तद्भवं प्राकृतमुच्यते ।
>
> तद्भवं तत्समञ्चेति द्विधा देश्यञ्च केवलम् ॥१

सङ्गीतदामोदरे-

> तद्भवस्तत्समो देशीत्यनेकः प्राकृतः समः ।
>
> देववाणीति विख्यातं संस्कृतं भुवनत्रये ॥२॥ इति

तद्भवं तत्र संस्कृते भवं लक्षणवशाद् रूपान्तरप्राप्तम्, यथा कृष्ण.घर पेरन्तादि । यथा वा —शृङ्गारः सिङ्गारो, चन्द्रः चन्दो, ब्राह्मण बम्हणो, कनकं कणङ्क, वनं वणं, सिन्दूरं सेन्दूरं, सेफालिका सेहालिया, स्वरतिः सुरही, लक्ष्मी लच्छी । -इति तद्भवम् ।

तत्समं संस्कृतसमं यथा--तरल तरङ्ग मन्दार हर हीर हार कीर केरल रमणी मणिप्रभृतय, शब्दाः । -इति तत्समम ।[१]

१। सङ्गीतदामोदरे प्रकारान्तरम्—

> संस्कृतं प्राकृतं अपभ्रंशः पैशाचिकमिति चतस्रो भाषा भवन्ति ।
>
> देववाणीति विख्यातं संस्कृतं भुवनत्रये ।
>
> साधुशब्दत्वमेतस्य सर्वत्र सूरयो विदुः ॥
>
> * * *
>
> तद्भवस्तत् समादेशीत्यनेकः प्राकृत क्रमः ।

एते संस्कृताद्भवं प्राकृतं । तद्भवः संस्कृत भवः । यथा—शृङ्गार सिङ्गारः चन्द्रश्चन्दः ब्राह्मणो बम्हणः कनक कणअ रत्नं रअनं सिन्दूरं सेन्दूरं सेफालिका सेहालिका सुरभि सुरही लक्ष्मी लच्छमीत्यादय । तत्समः । संस्कृतसमः । यथा - हीरहर-हार-कीर-केरल-जीवत-वल-रमणी-मपि प्रभृतयः शब्दाः ।

सरस्वतीकण्ठाभरणे (२।९) -देवाद्याः संस्कृतं प्राहुः प्राकृतं किन्नरादयः । पैशाचाद्य पिशाचाद्य मागधं हीनजातय ॥

देश्यम्—लक्षणैरप्रसिद्धं तत्तद्देशप्रसिद्धं महाकविप्रयुक्तं यथा—लड़ह पेट्ट चोक्यादि। यथा वा गुज्जरातादिदेशे अद्वन्द्वो प्रेमविछोली पङ्क्तिः कब्जाट्टमुत्पलमिति निगद्यते।

यदाह भोजदेवः—

देशे देशे नरेन्द्राणां जनानाञ्च स्वके स्वके।
भक्त्या प्रवर्त्तते यस्मात्तस्माद्देश्यं निगद्यते ॥३

दामोदरे—

यस्मिन् देशे यदारीतिः प्राकृतस्य निबध्यते।
तेनैव व्यवहारेण तद्देशीय निरुच्यते[१] ॥४

इति देश्यम्।

तच्च भाषा विभाषापभ्रंशपैशाचभेदतः।
चतुर्विधं तच्च भाषा विभाषा पञ्चधा पृथक् ॥५
अपभ्रंशास्त्रयस्त्रिस्रः पैशाच्यश्चेति पौरुषा।[२]

भाषा इति शेषः।

ननु—

महाराष्ट्री तथावन्ती शौरसन्यर्द्धमागधा।
वाह्लीकी मागधी प्राच्येत्यष्टौ दाक्षिणात्यया ॥६
शकाराभीर-चाण्डाल-शबर-द्राविड़ोड्रजाः।
हीना वनेचराणाञ्च विभाषा नाटकाश्रयाः ॥७

---

१। सङ्गीतदामोदरस्य ॥६—
यस्मिन् देशे यथारीति प्राकृतस्य निरुच्यते।
तेनैव व्यवहारेण तद्देशीयं निरूप्यते (?) ॥

२। तथा सरस्वतीकण्ठाभरणे (२।१७)—
शुद्धा साधारणी मिश्रा संकीर्णा नाग्यगामिनी।
अपभ्रष्टेति साचार्य्यैर्जातिः षोढा निगद्यत ॥

आवड़ो नाटवैदर्भावुपनागरनागरौ ।
वार्वरावत्य-पाञ्चाल-टाक्कमालव-कैकयाः ॥८

गौड़ोढ्र-दैव-पारचात्य-पाण्डय-कौन्तल-सैंहलाः ।
कालिङ्ग्य-प्राच्य-कार्णाट-काञ्च्य-द्राविड़-गौज्जराः ॥९

आभीरो मध्यदेशीयः सूक्ष्मदे।-व्यवस्थिताः ।
सप्तविंशत्यपभ्रंशा वैतालादि-प्रभेदतः ॥१०

काञ्चीदेशीय-पाण्डेच च पाञ्चालं गौड़मागधम् ।
व्राचड़ं दाक्षिणात्यञ्च शौरसेनञ्च कैकयम्' ॥११

'शवरं द्राविड़ञ्चैव एकादश पिशाचजाः' इति वदन्ति ; तत् कथमुच्यते मिलित्वा षोड़शेति ? तत्राह—

महाराष्ट्री शौरसेनी प्राच्यावन्ती च मागधी' इति पञ्चविधा भाषामुक्त्वा न पुनरष्टधा। तेनैव 'शौरसेन्या अदूरत्वे मागध्ये वार्द्धमागधीत्युक्तत्वात् दाक्षिणात्यायाश्च लक्षणाकरणात्। केषाञ्चिन्मते—शौरमागधी चेति पृथग्भाषाद्वयं भवति। यथा—

शौरसेन्यां बकारस्य हकारो भवति ध्रुवम् ।
चतुर्थीस्थाने षष्ठी तेन भेदोऽन्यभाषया ॥

सा भवेन्मागधी यत्र प्रथमान्तपदे भवेत् ।
एकार एव सर्वत्र भेदोऽयं मुनिसम्मतः ॥' इति ।

१। शास्त्रीयाष्टादश-भाषा यथा— संस्कृता १। प्राकृता २। उदीची ३। महाराष्ट्री ४। मागधी ५। मिश्रार्द्धमागधी ६। शकाभागी ७। श्रवन्ती ८। द्राविड़ी ९। ओड्रीया १०। पाश्चात्या ११। प्राच्या १२। वाह्लिका १३। रन्तिका १४। दाक्षिणात्या १५। पैशाची १६। आवन्ती १७। शौरसेनी १८। एतासां लक्षणोदाहरणानि प्राकृतलङ्केश्वरव्याकरणे द्रष्टव्यानि ।

वाह्लीकाश्चरे रेफस्य लत्वमात्रेण भेदादावन्त्यामेवान्तर्भावादिति भावः। रेफस्य लत्वमिति लक्षणम- मस्त्येवेति चेत् संस्कृतेऽपि केषाञ्चिद्रलयोरैक्यस्मरणमिति न दोषः।—इति भाषा।

शाकारी चैव चाण्डाली शावर्य्याभीरिका तथा
टाक्कीति युक्ता पञ्चैव विभाषा न तु षड़्विधा ॥१२

औढ़ास्तु औढ़्रदेशभाषानुगामिन्या शावर्य्यामेवान्तर्भावादिति भावः। ननु कथं द्राविडीमतस्य टाक्कीति प्रतिपाद्यते, तेनापि टाक्क्यां प्रतिपाद्य—

'टक्कदेशीयभाषाया दृश्यते द्राविड़ा तथा।
अत्रैवायं विशेषोऽस्ति द्राविड़ेनादृता परम् ॥ इति

टाक्क्यामेव द्राविड्या अन्तर्भावस्य उक्तत्वात् टाक्कीप्रतिपादनमेव न्यायः।—इति विभाषा।

नागर-व्राचड़श्चोपनागरश्चेति त्रय. अपभ्रंशा. परे सूक्ष्मभेदत्वान्न पृथङ् मताः। एषु त्रिष्वन्येषामन्तर्भावमिति। किञ्च -

असंयुक्तार्थयोर्दीर्घह्रस्वयोर्विपरीत्यतः।
उच्चारभङ्गो वर्णानामपभ्रंश उदाहृतः। १३

—इत्यपभ्रंशभाषा।

कैकेयं शौरसेनञ्च पाञ्चालमिति च त्रिधा।
पैशाच्यो नागरो यस्मात्तेनाप्यन्या न लक्षिता. ॥१४

तथा च स एवाह—अपरे लोकतः अवधारणीया इत्यर्थ।
सूक्ष्मभेदत्वात्तेषां भेदः कर्त्तुं न शक्यते।

यथा—

इक्षुक्षीरगुडादीनां माधुर्यस्यान्तरं महत्।
तथापि नैतदाख्यातुं सरस्वत्यापि शक्यते ॥१५॥ इति

तत्र सर्वभाषोपयोगित्वान्महाराष्ट्री भाषा चेति वर्णयति स्मा-
चार्य्यो दण्डी—

महाराष्ट्राश्रयां भाषां प्रकृष्टं प्राकृतं विदुः।
सागरः शुक्तिरत्नानां सेतुबन्धादि यन्मयम् ॥१६॥ इति

तथापभ्रंश-प्राकृतयोः समावेशः, यथा—मोरी वाणी अवहंस
रमइ, मम वाणी अपभ्रंश एव रमते—प्राकृतपक्षे मयूर-सम्बन्धिनी
वाणी अपगतहंसे वर्षाकाले रमते। तत्र च—

'रेफस्थाने लकारोऽत्र लस्य स्थाने लकारकः।
दकारश्च तकारोऽपि भेदकः प्राकृतादिभिः'।

तत्र कारणव्यपदेशेन देवादीनामपि क्वचित्। योजनीयं प्राकृतन्तु
नाना रूपकरूपके।

गङ्गासागरयोर्मध्ये ये देशाः समवस्थिताः।
हिमवद्विन्ध्यसौवीर-पुक्कशादि-समाश्रयाः ॥१७

उकारबहुलं तेषु स्वभाषादेर्मनीषिभिः।
ओकारवर्णनञ्चापि वचः कीकसदेशजः ॥१८

तत्र—

पैशाची तु पिशाच-राक्षसमयैर्नाटादिभिश्चाधमैः
पाषण्डैश्च वनोकसैश्च विविधैः पापाश्रियैः पुक्कसैः।

ये चाप्युत्तरदिङ्निवासनिरता नीचाः खसा वर्व्वरा—
स्तैरप्यत्र विशेषतो निगदिता भाषापिगद्या सदा[१] ॥१९

इति श्रील नरहरि-चक्रवर्त्तीना ( घनश्यामदासेन वा )
संगृहीते सङ्गीतसारसंग्रहे भाषादि-
निरुपणाख्यो पञ्चमोऽध्यायः ॥५॥

१। पिशात्र-राक्षस-समं र्णीचादिभिश्च विप्रैः पाषण्डैश्च विविधैः पापाश्रयैः पौक्कसैः ।

ये चाप्युत्तर-दिङ्निवास-निरताः
नीचा खसा-वर्वरास्तै—— ।
रप्यत्र विशोपतो नियमितो
भाषा निगद्या च सा ॥
इति पाठान्तरमपि दृष्टम् ।

# षष्ठोऽध्यायः

## छन्द-प्रकाश-प्रकरणम्

श्रीकृष्णगुणलावण्यकेलिवर्णन-हेतवे ।
कृतं शेषेण यद्वृत्त किञ्चित्तल्लक्षण ब्रुवे ॥१
लौकिकी वैदिकी चेति छन्दो द्विविधमेव हि ।
अत्र तल्लौकिकी छन्दःप्रकाश परिगृह्यते ॥२
छन्दोलक्षणहीन, सभासु काव्यं पठन्ति ये मनुजा. ।
कुर्वन्तोऽपि स्वेन, स्वशिरश्छेदं न ते वि द्युः (?) ॥३

तत्रादौ गुरुलघुविचारः—

अनुस्वारी च दीर्घश्च विसर्गी च गुरुर्भवेत् ।
वर्णः सयोगपूर्वश्च तथा पादान्तगोपि वा ॥४

छन्द कौस्तुभे—

अनुस्वारी विसर्गी च दीर्घो युक्तपरस्तथा ।
वर्णो गुर्मतो ह्ले प्रे दान्ते चापि वा लघुः ॥५
( पादान्ते गुरुरपि लघश्च गुरुर्विवक्षा भवेत् )

किञ्च, 'ल-एकमात्रो गोऽपि स्यात् पादान्ते सस्थितः क्वचित्' इति शिखरिणी शार्दूलविक्रीडितादि[१]-बहुषु समचरणयोरेव सम्भवन्ति । उक्तं हि

तेन शार्दूल-वंशस्थ-पुष्पिताग्रा-धत्रादिषु ।
न सम्भवन्ति पादेषु विषमेष कदाचन' ॥६। इति

१ । श्रीगङ्गादासो विरचिता छन्दोमञ्जर्य्याम् द्वितीय-स्तवके सप्तादशाक्षरा वृत्ति शिखरिणी शार्दुलविक्रीडितश्च द्रष्टव्यम् (Vide Baharampur Ed.,pp.158, 190) ।

पुनर्गुरुलघु-नियमविशेषमाह पिङ्गले—

दीहा संजुओ परोबिन्दुजुत्तो पाडिओ चरणान्ते।
सो गुरुवक्कदुमत्तोऽन्नो लहु होइ सुद्ध एक्क अल्लो (?) ॥७

अपवादान्तरमाह—

इहिआरा विन्दुजुआ एओ सुद्धां वण्ण मिलिआ विलहु।
रहवञ्जणसंजोए परे असेसम्पि होइ सविहासं ॥८

पुनरपि विकल्पान्तरमाह—

जइ दीहो विअ वण्णो लहु जीहा पढ़इ सो वि लहु।
वण्णोवि तुरिअं पढ़िओ दो तिनि एक्क जाने हु ॥९

वाणीभूषणे—

संयोग-पूर्वं सविसर्गकञ्च, दीर्घस्वरैः सङ्गतमन्त्यग वा।
विन्द्यादनुस्वारसमन्वितञ्च, गुर्वक्षर वक्रमिह द्विमात्रम् ॥१०

संयोगपूर्वोऽपि लघुः क्वचित् स्यात्,
क्वचित्तु प्रह्रादिगतो विभाषा।
एओ लघु प्राकृतके क्वचित्तु,
ह ही तथा बिन्दुयुतो पठित्वा ॥११

किञ्च सरस्वतीकण्ठाभरणे—

यदा तीव्रप्रयत्नेन संयोगादेरगौरवम्।
न च्छन्दोभङ्गमप्याहुस्तदा दोषाय सूरयः ॥१२

अत्र गुरुलघु-सङ्केतमाह—

गकारो गुरुरेकः स्याल्लकारो लघुरुच्यते ॥१३

वृत्तरत्नाकरे—

गुर्गश्च गुरुरेकः स्याल्लस्त्वेको लघुरुच्यते ॥१४

किञ्च—

एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते।
त्रिमात्रोऽपि प्लुतो ज्ञेयो व्यञ्जनञ्चार्द्धमात्रकम् ॥१५ इति

अथ वर्णवृत्तानां गणानाह वाणीभूषणे—

मगणोस्त्रिगुरुस्त्रिलघुर्नगणो
भगणादिगुरुर्यगणादिलघुः।
गुरुमध्यग-जो लघुमध्यग-रः
सगणोऽन्तगुरुस्तगणोऽन्तलघुः ॥१६

सङ्गीतपारिजाते—

आदिमध्यावसानेषु यरता यान्ति लाघवम्।
भजसा गौरवं यान्ति मनौ गौरव-लाघवे ॥१७

वृत्तरत्नाकरे—

सर्वगुर्मो मुखान्तलौ यरावन्तौ गलौ सतौ।
ग्मध्यादिज्भस्त्रिलो नोऽष्टौ भवन्त्यत्र गणास्त्रिकाः ॥१८
म्यरस्तजभ्नगैर्लान्तैरेभिर्दशभिरक्षरैः।
समस्तवाङ्मयं व्याप्तं त्रैलोक्यमिव विष्णुना ॥१९

आचार्य्योऽप्याह—

धी श्री स्त्री म्। व रा सा य्। का गु हा र्। व सु धा स्। सा ते क्व त्। क दा स ज्। कि म्व द भ्। न ह स न्। SSS म। ।SS य। S।S र। ।।S स। SS। त। ।S। ज। S।। भ। ।।। न। । लघु। S गुरु। इति सङ्केतः।

अथ गणदेवता आह—

मयरसतजभनसञ्ज्ञा-,श्छन्दस्यष्टौ गणास्त्रिवर्णाः स्युः।
भूम्यम्बुवह्निवायु-व्योमार्कसुधांशुनागदेवास्ते ॥२०

पिङ्गले—

पुहवी-जल-सिहि-पअणो गअणं सूरोअ चन्दमा नाओ।
गण अठ्ठ इट्ठवदेओ जह संखं पिङ्गले कहिओ ॥२१

अथ मादि-गणानां मित्रादिभावमाह—

मनौ सखायौ कथितौ भयौ भृत्यावुदीरितौ।
उदासीनौ तजौ प्रोक्तौ सरौ शत्रू मताविह ॥२२

पिङ्गले—

मगण नगण दुहु मित्त होइ एगण भगण होइ भिच्च।
उआसीन जन दुअ उगण अवमिट्ठ उअरिनिच्च ॥२३

अथ गणानां फलान्याह—

मः सम्पदं वितनुते नगणो यशांसि
श्रेयः करोति भगणो यगणो जयञ्च।
देशाद्विवासयति जो रगणो निहन्ति
राष्ट्रं विनाशयति मस्तगणोऽर्थहन्ता ॥२४

पिङ्गले—

मगण रिद्धि थिर कज्झ एगण सुहसम्पअ दिज्जइ
रगण मरण सम्पनइ जगण खरकिरण विसज्जइ।
तगण सुण्णफल कहइ सगण सहदेश उवासइ।
भगण ठरइ मङ्गल अनेक कवि पिङ्गल भासइ ॥२५
जतकव्वगाह दोहइ मुणहु नगण होइ पढमकखरइ।
तसु विद्धि वृद्धि सव्व उफुरइ रणाउल दुत्तर तरइ ॥२६

वृत्तरत्नाकरे—

दुष्टा रसतजा यस्माद्धनादीनां विनाशकाः।
काव्यस्यादौ न दातव्या इति छन्दोविदुः जगुः ॥२७

यदा दैववशादाद्यो गणो दुष्टफलो भवेत् ।
तदा तद्दोष-शान्त्यर्थं शोध्यः स्यादपरोगणः ॥२८

अथ दुष्टाक्षराणि तत्फलानि चाह—

हजध्रघ्नखभान् प्राहुर्दग्धवर्णान् विपश्चितः ।
हजधा हितजीवनधनहरा नृपक्रोधकृद्रेफः ।
तनुपीड़ारुग्व्रणदायी धनखा भ इहातिदुर्गतिदायी ॥२९

गीते विशेषमाह ( सङ्गीतपारिजाते )—

उद्ग्राहे न गराश्चैवमन्तरे मतलास्तथा ।
आभोगे हटकाश्चैव नव वर्णान् परित्यजेत् ॥३०
( एते धनादिनाशकाः )

अत्रोद्ग्राहादि-निरूपणमाह ( सङ्गीतशिरोमणौ )—

उद्ग्राहः प्रथमः पादः कथितः पूर्वसूरिभिः ।
ध्रुवत्वाच्च ध्रुवो मध्ये आभोगश्चान्तिमः स्मृतः ॥३१

हरिनायके—

ध्रुवाभोगान्तरे जातो धातुरन्योन्तराभिधः ॥३२
( गीतस्यावयवो धातुरिति )

वर्णदूषणे अपवादः ( पारिजाते )—

देवता यदि वाच्याः स्युर्दोषा एते भवन्ति न ।
माङ्गल्यो यदि शब्दः स्यान्मनुष्यार्थे न दोषभाक् ॥३३

भामहेनोक्तम्—

देवतावाचकाः शब्दा ये च भद्रादि-वाचकाः ।
ते सर्वे नैव निन्द्याः स्युर्लिपितो गणतोपि च ॥३४
लिपिर्वर्णः ।

अथ प्राकृतकाव्ये वर्णानिषेधमाह--

एओअं मलपुरओ स आवपुट्ठेहि वेविवण्णाउ।
कच्च तरग्गोअन्ता दहवण्णा पाउवेण हुअन्ति ॥३५

अथ मात्रावृत्त-गणानाह—

ज्ञेयाः सर्वादिमध्यान्ता गुरवोऽत्र चतुष्कलाः।
गणाश्चतुर्लघूपेताः पञ्चचार्य्यादिषु संस्थिताः ॥३६

ऽऽ सर्वगुरु। ऽ।। आदि। ।ऽ। मध्य। ।।ऽ अन्त। ।।।। लघु।

पिङ्गले—

गुरुजुअकण्णो गुरु अन्त करअल पत्तहरमिम गुरुमज्झो।
आइगुरुच्च सुचरणे विप्पोसच्चेहिं लघुएहिं ॥३७

वाणीभूषणे—

कर्णः स्याद्‌गुरुयुगलं, गुर्वन्तः करतलो भवति।
गुरुमध्यमः पयोधर इति ख्यातम्।
आदिगुरुश्च सुचरण चतुर्लघुर्द्विजवरो ज्ञेयः ॥३८

पिङ्गलादौ मात्रागण-निरूपण-वहुप्रकारोऽस्ति बाहुल्यभयादत्र नोक्तम्।

अथ वृत्तजातिमाह—

पद्यं चतुष्पदी तच्च वृत्तजातिरिनि द्विधा।
वृत्तमक्षर-संख्यातं जातिर्मात्राकृता भवेत्[1] ॥३९

अन्येऽपि च—

वर्णमात्रा-विभेदेन छन्दो द्विविधमीरितम् ॥४०। इति

१। श्रीगङ्गादासो विरचिता छन्दोमञ्जर्य्यां प्रथम-स्तवके चतुर्थश्लोकमिदम्। भावार्थसन्दीपनी-टीका यथा—

..........वृत्तं जातिश्च अक्षर-संख्यातं
वृत्तं अक्षरेण गुरु-लगु-भेदेन गुणितमित्यर्थः।
जातिर्मात्रा कृता भवेत् मात्रया रचितेत्यथः।

पादलक्षणमाह—

यथासमाप्ति भागस्य छन्दसां चरणो भवेत् ॥४१

अन्ये—

चतुर्थ-पद्यभागस्तु पादः सद्भिर्निगद्यते ॥४२

श्लोकतुर्य्यांशः पाद इत्यर्थः, अत्र भागः समचतुर्थांशो न ग्राह्यः, किन्तु यावान् यत्रोच्यते तेनसमार्द्धसमविषमाणां पादाः संगृहीताः स्युः ।

अथ यतिमाह ( वृत्तरत्नाकरे )—

यतिर्जिह्वेष्ठ-विश्रामस्थानं कविभिरुच्यते ।
सा विच्छेद-विरामाद्यैः पदैर्वाच्या निजेच्छया ॥४३

किञ्च—

श्वेतमाण्डव्यादयस्तु यतिर्न मन्यन्ते । यदुक्तं—

श्वेतमाण्डव्यमुख्यास्तु नेच्छन्ति मुनयो यतिम् ॥४४

विशेषमाह भरतः—

नियतः पदविच्छेदो यतिरित्यभिधीयते ।
विराम-धृति-विच्छेद-विश्रामाद्याभिधायकैः ॥४
केवलैरपि पक्षाद्यैर्वनिर्वाच्या मनीषिभिः ।
न विना यति-सौन्दर्य्यं काव्यं भव्यतरं भवेत् ॥४६
जयदेवः पिङ्गलश्च संस्कृते यतिमिच्छतः ।
न माण्डव्य-प्रभृतिभिर्यतिरत्रानुमन्यते ॥४७
गुणो विरति-रक्षायां यतिभ्रंशेन दूषणम ॥४८। इति

छन्दोमञ्जर्य्यां—

क्वचिच्छन्दस्यास्ते यतिरभिहिता पूर्वकृतिभिः
पदान्ते सा शोभा व्रजति पदमध्ये त्यजति च ।
पुनस्तत्रैवासौ स्वरविहितसन्धिः श्रयति तां
यथा कृष्णः पुष्णात्वतुलमहिमा मां करुणया ॥४९। इति

अथ सम-विषमनामन्याह—

अयुग्मं विषमं स्थानमयुगोजश्च तद्भवेत्।
अनोजोयुक् च युग्मञ्च समं तत् परिकीर्त्यते ॥५०

अथ वृत्तत्रयनिरूपणमाह—

सममार्द्धसमं वृत्तं विषमञ्चेति तत्त्रिधा।
समं समचतुष्पादं वृत्तमर्द्धसमन्तु तत्[१] ॥५१
आद्यस्तृतीयवद्यस्य द्वितीयस्तुर्य्यवद्भवेत्।
भिन्नचिह्नचतुष्पादं विषमं परिकीर्त्तितम्[२] ॥५२

अत्र वृत्तानामयनप्रकारमाह—

आरभ्यैकाक्षरात् पादात्दकैकाक्षर-वर्द्धितैः।
पादैरुक्थादि-संज्ञः स्यात् छन्दः षड्विंशति गतम् ॥५३

तद् यथा—

उक्थाऽत्युक्था तथा मध्या प्रतिष्ठा सुप्रतिष्ठिका।
गायत्र्युष्णिगनुष्टुप् च वृहती पङ्क्तिरेव च ॥५४
त्रिष्टुप् च जगती चापि तथातिजगती मता।
शक्करी सातिपूर्वा स्यादष्टिरत्यष्टिरित्यपि ॥५५
धृतिश्चातिधृतिश्चैव कृतिः प्रकृतिराकृतिः।
विकृतिः संस्कृतिश्चापि तथाभिकृतिरुत्कृतिः ॥५६
तदूर्ध्वं चण्डवृष्ट्यादि-दण्डकाः परिकीर्त्तिताः ॥५७

१। श्रीगङ्गादासो विरचिता छन्दमञ्जार्य्याम्—
सम-मर्द्धसमं वृत्तं विषमञ्चेति तत्त्रिधा।
समं समचतुष्पादं भवत्यर्द्धसमं पुनः॥

२। छन्दोमञ्जरी-ग्रन्थे पाठभेदो यथा—
आदिस्तृतीयवद्यस्य पादस्तुर्य्यो द्वितीयवत्।
भिन्न-चिह्न-चतुष्पादं विषमं परिकीर्तितम्॥

अथ वर्ण-प्रस्तारः—

पादे सर्वगुरौ गुरोः प्रथमतः कुर्यादधस्ताल्लघुं
शेषन्तूर्ध्वसमानकं विरचयेदूने गुरूनर्पयेत् ।
पादः सर्वलघुर्न यावदुदियात्तावद्विदध्यादिदं
प्रस्तारः खलु वर्णवृत्त-निपुणैरेष स्मृतः पण्डितैः ॥५८

अथ वर्णवृत्तप्रभेदं पङ्क्तिद्वयेनाह—

आद्यामेकादिभिर्द्व्याद्यैर्द्वितीयां द्वितैः

छन्दःकौस्तुभे—

भर पूर्वामेकाद्यैर्द्व्याद्यैर्द्विगुणैर्द्वितीयाञ्च ॥५९

(पूर्वां प्रथमां पङ्क्तिमेकाद्यैरेकद्वित्र्यादिभिरङ्कैर्भर. द्व्यादिभि-र्द्विगुणितैरङ्कैर्द्वितैयाञ्च पङ्क्तिं भर पूरयेत्यर्थः। )

अथोद्दृनिका—

| वर्णच्छन्द. | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ |
|---|---|---|---|---|---|---|---|---|---|---|---|
| छन्दःप्रभेदः | २ | ४ | ८ | १६ | ३२ | ६४ | १२८ | २५६ | ५१२ | १०२४ | २०४८ |

—इत्यादि

[ १ ]

## ॥ अथ मात्रा प्रस्तारः ॥

विषमकलो लघुपूर्वः सर्वगुरुः समकलो भवेत् पादः ॥६०

[ अत्र पादस्थापनं द्वेधा भवति, समकलस्य पादस्य सर्वे गुरवः स्थाप्याः, विषमकलस्य तु एको लघुस्ततो गुरव इति। ]

ततः प्रस्तार-प्रवृत्तिः यथा—

दत्वाधः प्रथमगुरोर्लघुं विदध्या-
दूर्ध्वस्थैः किल सदृशानि शेषकाणि ।
ऊने स्याद्गुरुरलघुरेष मात्रिकाणां
प्रस्तारः सकललघुर्न यावदङ्घ्रिः ॥६१

किञ्च—

अत्र द्वित्रिचतुः-पञ्चषट्कादीनां विनिर्ममे ।
प्रस्तारं खलु मात्राणां पादानां नागनायकः ॥
तद्भेदा द्वित्रि पञ्चाष्ट थयोदश मुखा क्रमात् ॥६२

| मात्राछन्दः | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| मात्रा प्रभदः | १ | २ | ३ | ५ | ८ | १३ | २१ | ३४ | ५५ | १९ | १४४ | २३३ |

अथ पङ्क्तिद्वये मात्रावृत्त प्रभेदमाह—

एकाद्यङ्कैः प्रथमामुद्दिष्टाङ्कैर्भरेद्द्वितीयाञ्च ॥६३। इति
[ प्रथमां पक्तिमेकाद्यङ्कैरेकद्वित्रिचतुरादिभिरङ्कैः भरेत् पूरयेत्, द्वितीयां पंक्तिमुद्दिष्टाङ्कैरेकद्वित्रिपञ्चाष्टत्रयोदशैकविंशत्यादिभिर्भरेदित्यर्थः ] ।

अथाङ्कसंज्ञामाह—

खं शून्यं विधुरेकः स्यान्नेत्र-पक्षौ द्विके स्मृतौ ।
त्रिके शिखिगुणा वेदाब्धियुगानि चतुष्टये ॥६४

शरा भूतानि करणानि च प्रोक्तानि पञ्चके ।
ऋतवो गुहवक्त्राणि रसाश्च षड्दीरिताः ॥६५

स्वराश्च मुनि-लोकाश्च सप्तेह परिकीर्त्तिताः ।
भोग्यङ्गवसवोऽष्ट स्युर्नव रन्ध्रग्रहाः स्मृताः ॥६६

दिशो दशैकादश स्युः शिवा द्वादश सूर्य्यकाः ।
चतुर्दशात्र भुवनान्येवमाहुर्मनीषिणः ॥६७

इति संज्ञानिबन्धादयः ।

[ २ ]

## ॥ समादि-वृत्तम् ॥

अथ सममर्द्धसमं वृत्तमित्युक्तक्रमप्राप्त-समवृत्तभेदांस्तावदाह—

( १ )

तत्रैकाक्षरोक्था यथा—श्रीछन्दः, गश्रीः [ चतुः पादात्पद्यपूर्त्तिः ]

पिङ्गले—सी सो, जंगो।

वाणीभूषणे—यद्गो, मा श्री।

उदाहरणं—श्री स्ते सा स्ताम्। यथा वा—कृष्णं वन्दे ।१

मधु। महु। लहु। यथा—मधु पिब ।२। अत्र द्विभेदः।

( २ )

द्व्यक्षरात्युक्था—गौ स्त्री।

उदाहरणं यथा—गोपस्त्रीभिः कृष्णो रेमे ॥३

सारु एह गोरि रेह। उदाहरणं—रक्ष कृष्ण मां मुकुन्द ॥४

एवमग्रे उदाहरणानि कल्प्यानि। द्व्यक्षरस्य चत्वारो भेदाः, प्रस्तारक्रमाद्बोध्याः।

( ३ )

त्र्यक्षरा मध्या यथा—

मो नारी[१] ॥५

रो मृगी[२] ॥६

---

उदाहरणं यथा श्रीगङ्गादासो विरचित। छन्दमञ्जरी-ग्रन्थे—

१। गोपानां नारीभिः।
श्लिष्टोऽव्यात् कृष्णो वः॥

२। सा मृगीलोचना।
राधिक श्रीपतेः॥

( ४ )

चतुरक्षरा प्रतिष्ठा यथा—

गमौ चेत् कन्या[1] ॥७

नगि सती[2] ॥८

( ५ )

पञ्चाक्षरा सुप्रतिष्ठा यथा—

सलगैः प्रिया[3] ॥९

भगौ गिति पङ्क्तिः[4] ॥१०

( ६ )

षडक्षरा गायत्री यथा—

ह्रिया सोमराजी[5] ॥११

शशिवदना न्यौ[6] ॥१२

त्यौ चेत्तनुमध्या[7] ॥१२

१। भास्वद् कन्या सेका धन्या ।
यस्याः कूले कृष्णोऽखेलत् ॥

२। मुररिपो तव पदं ।
नमति सा ननु सती ॥

३। व्रजसुभ्रुवो विलसत्कला. ।
अभवन् प्रिया मुरवैरिण. ॥

४। कृष्णसनाथा तर्णकपङ्क्ति. ।
यामुनकच्छे चारु चचार ॥

५। हरे ! सोमराजी समा ते यश. श्रीः ।
जगन्मण्डलस्य च्छिनत्त्यन्धकार ॥

६। शशिवदनानां व्रजतरुणीना ।
अधर सुधोर्मिं मधुरिपुरैच्छत् ॥

७। मूर्तिर्मुरशत्रो रत्यद्भुत रूपा ।
आस्तां मम चित्ते नित्यं तनुमध्या ॥

त्सौ चेद्वसुमती ॥१४

( ७ )

सप्ताक्षरोष्णिग् यथा—

मग्गा हंसमाला ॥१५

ननगि मधुमती[१] ॥१६

चूड़ामणिस्तभगाः ॥१७

म्भौ गः स्यान्मद लेखा[२] ॥१८

( ८ )

अष्टाक्षरानुष्टुप् यथा—

मो मो गो गो विद्युन्माला[३] ॥१९

चित्रपदा यदि भौ गौ[४] ॥२०

ग्लौ र जौ समानिका तु[५] ॥२१

प्रमाणिका जरौ लगौ[६] ॥२२

उदाहरणं छन्दोमञ्जरी-ग्रन्थं—

१। रविदुहितृतटे वनकुसुमनतिः।
व्यधित मधुमती मधुमथन मुदं॥

२। रङ्गे बाहुविरुग्णाद्दन्तीन्द्रान्मदलेखा।
लग्नाभून्मुग्धगात्रे कस्तुरीस्मनचर्चा॥

३। वामोवल्ली विद्युन्माला वर्हश्रेणी शाक्रश्चापः।
यस्मिन् मस्तात् तार्णौच्छित्यै गोमध्यस्थः कृष्णाम्भोदः॥

४। यामुन सैकत देशे गोपवधूजलकेली।
कंसरिपो र्गतिलीला चित्रपदा ऽदव्यात्॥

५। यस्य कृष्णपादपद्ममस्ति हृत्तड़ागसद्म।
धीः समानिका परेण नोचितात्र मत्सरेण॥

६। पुनातु भक्तिरच्युता गदाच्युताङ्घ्रि-पद्मयोः।
श्रुतिस्मति प्रमाणिका भवाम्बुराशि-तारिका॥

भात्तलगा मानवकम्[१] ॥२३
नाराचकं तरौ लगौ ॥२४
पद्ममाला च रौद्वौ गौ ॥२५
सुचन्द्राभा यरौ ग्लौच ॥२६
सुविलासा सरौ ग्लौ हि ॥२७

( ९ )

नवाक्षरा वृहतौ यथा—

स्यात्मणिमध्य चेद् भमसाः२८
सजरैर्मु जङ्गसङ्गता ॥२९
रान्नसाविह हलमुखी ॥३०
भुजगशिशुसृता नौ मः[२] ॥३१

( १० )

दशाक्षरा पंक्तिर्यथा—

नरजगै र्भवेन्मनोरमा[१] ॥३२
त्वरितगतिश्च न ज न गैः ॥३३
रुक्मवती सा यत्र भमौ स्गौ ॥३४
ज्ञेया मत्ता म भ स ग-सृष्टा[१] ॥३५

उदाहरणं यथा—

१। चञ्चलचूड़-ञ्चपलैर्वत्मकुल. केलिपरं ।
ध्याय सखे ! स्मेरमुखं नन्दसुतं माणवकं ॥

२। ह्रदतटनिकटक्षोणी भुजगशिशुसृता यासीत् ।
मुररिपु-दलिते नागे व्रजजनस्युखदा साभूत् ॥

३। तरणिजानटे विहारिणी व्रजविलासिनीविलासतः।
मुररिपोस्तनुः पुनातु वः सुकृतशालिनां मनोरमा ॥

४। पीत्वा मत्ता मधुपाली, कालिन्दीये तटवनकुञ्जे ।
उद्दीव्यन्ती व्रजजनरामाः कामासक्ता मधुजिति चक्रे ॥

जौ रगौ मयूरसारिणी स्यात् ॥३२

म्नौ यगौ चति पणवनामेदम् ॥३७

( ११ )

एकादशाक्षरा त्रिष्टुप् यथा—

स्यादिन्द्रवज्रा यदि तौ जगौ गः[१] ॥३८

उपेन्द्रवज्रा जतजास्ततो गौ[२] ॥३९

[ एतयोश्चरण-साङ्कर्यैरुपजाति-भेदाः ]

तथाहि सरस्वतीकण्ठाभरणे—

अनन्तरोदित-लक्ष्मभाजौ
पादौ यदीयावुपजातयस्ताः ।
इत्थं किलान्यास्वपि मिश्रितासु
स्मरन्ति जातिष्विदमेव नाम[३] ॥४०

वाणीभूषणे—

उपेन्द्रवज्रापद सङ्गतानि
यदीन्द्रवज्रा-चरणानि च स्युः ।
तदोपजातिः कथिता कवीन्द्रै-
र्भेदा भवन्तीह चतुर्दशस्याः ॥क

रत्नाकर-टीकायां—

एके च पादे चरणद्वये वा
पादत्रये वान्यतरस्थितश्चेत् ।
तयोरिहान्यत्र तदोहनीया-
श्चतुर्दशोक्ता उपजातिभेदाः ॥ख

---

उदाहरण यथा—

१। 'गोष्ठे गिरिं सव्यकरेण धृत्वा' प्रभृति ।

२। छन्दोमञ्जरी-ग्रन्थे पाठभेद —
उपेन्द्रवज्रा प्रथमे लघौ सा ।

३। छन्दमञ्जर्य्यां पाठभेदः—
....वदन्ति जातिष्विदमेव नाम ।

उपजातीनां नामान्यह वाणीभुषणे—

कीर्त्तिर्वाणी माला साला हंसी माया जाया बाला ।
आद्रा भद्रा प्रेमा वामा ऋद्धि बुद्धिस्ततसोमाख्या ।।ग

पुनः पिङ्गल-प्रदीपे—

इन्द्रवज्रोपेन्द्रवज्रे संयुते च परस्परम् ।
वातोर्मीशालिनी चेति तथैव मिलिते उभे ।।घ
तथा वंशस्थविलया इन्द्रवंशा च सङ्गता ।
परस्परं क्रमाज्ज्ञया स्वागतया रथोद्धता ।।ङ
स्वस्वप्रस्तारतश्चात्र स्वल्पभेदास्तथैव हि ।
अन्यच्च मिश्रितं युक्त पठन्तीहोपजानिषु ।।च
पदेन च पदाभ्याञ्च पदैरिह हि योजनम् ।
प्रस्तारक्रम एषोऽत्र मया सम्यक् प्रदर्शितः ।।छ

अथोट्टालिका—

[ सङ्केतः -इ - इन्द्रवज्रा, उ उपेन्द्रवज्रा ]

१। कीर्त्तिः --उ इ इ उ ; २। वाणी —इ उ इ इ
३। माला —उ उ इ इ ; ४। माला—इ इ उ इ
५। हंसी —उ इ उ इ ; ६। माया—उ उ उ इ
७। जाया—इ उ उ इ ; ८। बाला—इ इ इ उ
९। आद्रा—उ इ इ उ ; १०। भद्रा — इ उ इ उ
११। प्रेमा—उ उ इ उ ; १२। वामा — इ उ उ उ
१३। ऋद्धि —उ इ उ उ ; १४। बुद्धि इ उ उ उ ।

---

वातोर्मी सा मभता गौ च यत्र ।।४१
मात्तौ गौ चेत् शालिनी वेदलोकैः ।।४२
[ एतयोश्चरण-साङ्कर्य्यैरुपजातिभेदाः ]

स्वागता रनभगैर्गुरुणा च ॥४३

रान्नरैर्नरलगौ रथोद्धता ॥४४

[ एनयोश्चरण-साङ्कर्य्ये रूपजातिभेदाः ]

दोधकमिच्छति भत्रितयाद् गौ ॥४५

ननजलगैर्गदिता सुमुखी ॥४६

मो गो नो गो भ्रमरविलसिता ॥४७

ननमगगुरु-रचिता वृत्ता ॥४८

ननरल-गुरुभिस्तु भद्रिका ॥४९

श्येन्युदीरिता रजौ रलौ गुरुः ॥५०

स्यादनुकूला भत नगगाश्चेत् ॥५१

स्यान्मोटकन्तु त ज जाश्च लगौ ॥५२

( १२ )

द्वादशाक्षरा जगती यथा—

वदन्ति वंशस्थविल जतौ जरौ ॥५३

तच्चेन्द्रवंशा प्रथमाक्षरे गुरौ ॥५४

छन्दोमञ्जर्य्यां उदाहरण यथा—

१। यस्य कीर्त्तिरिन्दुकुन्दचन्दनश्येन्यशेषलोकपावनी सदा।
जाह्नवीव विश्ववन्द्यविभ्रमा, न भजामि भावगम्यमच्युत ॥

२। वल्लववेशा मुररिपुमूर्त्तिर्गोपमृगाक्षीकृतरतिपूर्त्तिः।
वाञ्छितसिद्ध्यै प्रणतिपरस्य स्यादनुकूला जगति न कस्य ॥

३। रङ्गे खलु मल्लकलाकुशलत्वाच्चानूर महाभट मोटनक।
यः केलिलवेन चकार स म संसारप्रतिमोटयत् ॥

४। विलासवंशस्थविलं मुखानिलैः प्रपूर्य्य यः पञ्चमरागमुद्गिरन्।
व्रजाङ्गनानामपि गानशालिना, जहार मानं स हरिः पुनातु नः ॥

५। दैत्येन्द्रवंशाग्निरुदीर्णदीधितिः
पीताम्बरोऽसौ जगता तमोहरः।
यस्मिन् ममज्जुः शलभा इव स्वय
ते कंस चानूरमुखा मखद्विषः ॥

[ एतयोश्चरण-साङ्कर्यादुपजातिभेदाः ]

द्रुतविलम्बितमाह नभौ भरौ ॥ ५५

रसैर्जसजसा जलोद्धतगतिः ॥५६

चतुर्जगण वद मौक्तिकदाम ॥५७

इह तोटकमम्बुधि-सैर्गदितम् ॥५८

वसुयुगविरतिर्नौम्यौ पुटोऽयम् ॥५९

कीर्त्तितैषा चतूरेफिका स्रग्विनी ॥६०

नय महितौ न्यौ कुसुमविचित्रा ॥६१

इह वद तामरसं नजजा यः ॥६२

भवति नजावथ मालती जरौ ॥६३

भुजङ्गप्रयातं भवेद्यैश्चतुर्भिः ॥६४

त्यौ त्यौ मणिमाला छिन्ना गुहवक्त्रैः[1] ॥६५

विभावरीति सा जरौजगौ यन. ॥६६

(पञ्चचामरमित्यन्ये)

इह भवेन्नभजरैः प्रियम्वदा ॥६७

घोरैरभाणि ललिता तभौ जगौ ॥६८

ननभर-रचिता कथितोज्ज्वला ॥६९

अब्ध्यङ्गैः स्याज्जलधरमाला म्भस्माः ॥७०

भुवि नवमालिनी नजभयैः स्यात् ॥७१

( १३ )

त्रयोदशाक्षरातिजगती यथा—

त्र्याशाभिर्म न ज र गाः प्रहर्षिणीयम् ॥७२

तुरग-रस-यतिर्नौ ततौ गः क्षमा ॥७३

---

१। पाठभेदः—

त्यौ त्यौ 'मनिमाला' छिन्ना गृहवक्त्रैः।

प्रभवति ननसमगैरिह चण्डी ॥७४

भवति भुवि ननममगौगुरुगौरी ॥७५

स ज सा ज गौ च यदि मञ्जुभाषिणी ॥७६

जनौ सजौ गौ भवति सन्धिवार्षिणी ॥७७

नन-नन-गुरुभिश्चन्द्रिकाश्वर्त्तुभिः ॥७८

इह नन्दिनी सजससैर्गुरुयुक्तैः ॥७९

भवति मृगेन्द्रमुखं नजौ जरौगः ॥८०

( १४ )

चतुर्दशाक्षरा शक्करी यथा—

ननरमलघुगैः स्वरैरपराजिता[1] ॥८१

ज्ञेया वसन्ततिलका तभजा जगौगः[2] ॥८२

न न भ न लगिति प्रहरणकलिका ॥८३

मत्तौ नौ मौ गौ गदिता वासन्तीयम्[3] ॥८४

इन्दुवदना भजसनैः सगुरुयुग्मैः ॥८५

स्वरभिदि यदि नौ तौ च नान्दीमुखी गौ ॥८६

( १५ )

पञ्चदशाक्षरातिशक्करी यथा—

इहननहयलघुरथ गिति शशिकला[4] ॥८७

छन्दमञ्जरीग्रन्थे पाठभेद.—

१। न न र म ल गिति स्वरैरपराजिता।

२। ज्ञेयं वसन्ततिलकं त भ जा ज गौ ग.।

३। मत्तौ नौमौ गौ यदि गदिता वासन्तीयं।

४। गुरुनिधन मनुलघुरिह शशिकला।

स्रगिह भवति रस-नरकयतिरियम्[1] ॥८८
वसुमुनि-यतिरिह गुणमणिनिकरः[2] ॥८९
ननमयय-युतेयं मालिनी भोगिलोकैः ॥९०
भवति नयौ भजौ र-सहितौ प्रभद्रकम् ॥९१
सजना नयौ शरदशक-विरतिरेला । ९२
एकन्यूनौ विद्युन्माला-पादौ चेल्लीलाखेलः ॥९३
विपिनतिलकं न स न रेफयुग्मैर्भवेत् ॥९४
म्रौ मो यौ चेद्भवेतां सप्ताष्टकैश्चन्द्रलेखा[3] ॥९५
तूणकं समानिका-पदद्वयं विनान्तिमम् ॥९६
छन्दो भवेत्तभजजैरयुतैर्मृदङ्गकम् ॥९७
भवतः सजौ ससयुतौ वृषभस्ततो यः ॥९८

( १६ )

षोड़शाक्षराऽष्टिर्यथा —

चित्रसंज्ञमीरितं समानिका-पदद्वयन्तु ॥९
प्रमाणिका-पदद्वयं वदन्ति पञ्चचामरम् ॥१००
भात्समहनगैरष्टच्छेदे स्यादिह चकिता ॥१ १
नजरभभेन गेन च स्यान्मणिकल्पलता ॥१०२
यमौ नः स्रौ गश्चेत् प्रवरललितं नाम वृत्तम्[4] ॥१०३
नजभजरैः सदा भवति वाणिनी गयुक्तैः ॥१०४

१ । स्रगिय मपि च रस नव-रचित यतिः ।
२ । वसुमुनि यतिरिति मनिगुण-निकरः ।
३ । म्रोमश्चेद्यौ भवेतां सप्ताष्टकैश्चन्द्रलेखा ।
४ । यमौ नः स्रौ गश्च (प्रवरललितं) नाम वृत्तं ।

द्विगुणित-वसुलघुभिरचलधृतिरिह ॥१०५

पञ्चभकार-कृताश्वगतिर्यतिरन्तगुरुः ॥१०६

गरुडरुतं नजौभजतगा यदा स्युस्तदा ॥१०७

( १७ )

सप्तदशाक्षराऽत्यष्टिर्यथा—

रसै रुद्रैश्छिन्ना यमनमभलागः शिखरिणी ॥१०८

यदि भवतो नजौ भजजलागुरुर्नर्दटकम् ॥१०९

हयऋतुसागरैर्यतियुत वनकोकिलकम्[1] ॥११०

मन्दाक्रान्ताऽम्बुधिरसहयैर्मो[2] भनौ तौ गयुग्मम् ॥१११

वेदर्त्वश्वैर्मभनमयलागश्चेत्तदा हारिणी ॥११२

समदविलासिनी नजभजैर्भलगैरिनशरैः ॥११३

( १८ )

अष्टादशाक्षरा धृतिर्यथा—

स्यादभूतर्त्वश्वैः कुसुमितलतावेल्लिताम्तौ नयौ यौ ॥११४

दश-वसु-विरतिर्ननौ रैश्चतुर्भिर्यतौ चेल्लता ॥११५

त्र्यधिकदश-यतिर्ननौ रौ भवेतां रगौ नारका ॥११६

मः सो जः सतसा दिनेश-ऋतुभिः शार्दूलविक्रीडितम् ॥११७

मौ जयौ भरस युतावृतुवाणाश्वैर्हरकुन्तनम् ॥११८

ऊनविंशत्यक्षरातिधृतिर्यथा—

रसर्त्वश्वैर्य्मौ न्सौ ररगुरुयुतौ मेघविस्फूर्जिता स्यात् ॥११९

भवेत् सैवच्छाया नयुग-गयुता स्याद् द्वादशान्ते यदा ॥१२०

१। सप्तभिः षड्भिश्चतुर्भिश्च यतिश्चेत्तदा नर्दटकमेव कोकिलकं वद कथया वनकोकिलकमित्यन्ये।

२। पाठभेदः —

'मन्दाक्रान्ताम्बुधिरसनगैर्मो. . .'।

सूर्य्याश्वैर्यदि मः मजौ सततगाः शार्द्दूलविक्रीडितम्[1] ॥१२१
मो गो नौ तौ गौ शरहयतुरगैः फुल्लदाम प्रसिद्धम् ॥१२२
भौ जतौ तस्तगुरुकौ यदादिग्ग्रहच्छेदभाग् वल्लकी ॥१२३

( २० )

विंशत्यक्षराकृतिर्यथा—

सजजा भरौ सल्गा यदा गदिता[2] तदा किल[3]गीतिका ॥१२४
त्रीरजौ गलौ भवेदिहेदृशेन लक्षणेन वृत्त नाम ॥१२५
रसाश्वाश्वः शोभा यमननततगा गश्च विद्भिर्निरुक्ता[4]॥१२६

( २१ )

एकविंशत्यक्षरा प्रकृतिर्यथा—

म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयम् ॥१२७
नजभजजा जरौ यदि तदा गदिता सरसी कवीश्वरैः ॥१२८

( २२ )

द्वाविंशत्यक्षराकृतिर्यथा—

मौ गौ नाश्चत्वारो गो गो वसुभुवन-यतिरिति भवति हंसी ॥१२९
भौ नरना रनावथगुरुर्दिगर्कविरमं हि भद्रकमिदम् ॥१३०
सप्तभकारयुतैक[5] गुरुर्गदितेयमुदारतरा मदिरा ॥१३१
सजताः सभौ रगौगः फणितुरङ्गहयैः स्यान्महास्रग्धराख्या ॥१३२

१। पाठभेद —
'अर्काश्वैर्मसजस्ताः सगुरव. शार्दूलविक्रीडितं' ;

२। कथिता वा। ३। खलु वा

४। पाठभेद.—
रसाश्वाश्वैः शोभा नयुगलजठग
मेघविस्फूर्जिता चेत् ।—छन्दोमञ्जर्य्याम्

५। छन्दोमञ्जर्य्यां पाठभेदः—
सप्तभकारयुतैक.... ।

त्रयोविंशत्यक्षरा विकृतिर्यथा —

नजभजभा जभौ लघुगुरू यदि निगदितेयमद्रितनया[1] ॥१३३

यदिह नजौ भजौ भजभला स्तदाश्वललितं हरार्कयतियुक् ॥१३४

( २४ )

चतुर्विंशत्यक्षरा संस्कृतिर्यथा—

भूतमुनीनैर्यतिरिह भतनाः स्भौ[2] भनयाश्च यदि भवति तन्वी ॥१३५

( २५ )

पञ्चविंशत्यक्षराऽभिकृतिर्यथा—

क्रौञ्चपदा भमौ स्भौ ननना नगा-
विषुशरवसुमुनिविरतिरिह भवेत् ॥१३६[3]

( २६ )

षड्विंशत्यक्षरोत्कृतिर्यथा—

यस्यामाद्यच्छेदोपेता भमननन—
ननैर्गलगैर्भुजङ्गविजृम्भितम् ॥१३७
मोना. षट् सगुणिति यदि नव-रम-
रम-शरयतियुतमपवाहाख्यम् ॥१३८

(एतानि अष्टत्रिंशदधिकशतच्छन्दांसि

१। उदाहरणम्—

खरतरशौर्यपावकशिखापतङ्गनिधनः स्व दनुजो जलधिस्थविलास
वसतिः....

२। भतनामभौ ?

३। 'क्रौञ्चपदा स्याद्भौममभाश्चेदिषुशरवसुमुनियतिरिन-लघुगैः' इति छन्दमञ्जर्याम्।

॥ अथ दण्डकाः ॥

यदिह नयुगलं ततः सप्तरेफास्तदा 'चण्डवृष्टिप्रपातो' भवेद् दण्डकः।[1] ॥६

प्रतिपद-विवृद्धरेफाः[2] स्युरर्णोर्णव व्याल-जीमूत-लीलाकरोद्दाम-शङ्खादयः[3] ॥७-८

एकोनसहस्राक्षरा यावत पादो भवेत् यथेष्टकल्पिताभिधाना दण्डका भवन्ति। तद् यथा-

'एकोनसहस्राक्षरपर्यन्ता दण्डकास्त्रयः प्रोक्ता
वर्णत्रिकगणवृद्ध्यात द्वितीया महामतिभिरिति ॥

अथ प्रचितकः -

प्रचितकसमभिधो धीरधीभिः स्मृतो-दण्डको न-द्वयादुत्तरैः सप्तभिर्यैः[4] ॥९

अशोकपुष्पमञ्जरी—

यत्र दृश्यते गुरोः परो लघुः क्रमात् स कथ्यते बुधैरशोकपुष्प-मञ्जरी।[5] ॥१०

१। उदाहरणं यथा--

तत्क्षणघनघटा-महारम्भमेघवर्षी-चण्डवृष्टिप्रपाताकुलं गोकुलं सर्वदैव समवलोक्य त्र्येन हस्तेन गोवर्द्धनं नाम शैलं दधल्लीलया कमल-नयन रक्षयन्निति....प्रमोदाय व ।

२। 'प्रतिचरणविवृद्धरेफा' वा।

३। उदाहरणं यथा—

जय जय जगदीश विष्णो हरे राम, दामोदर श्रीनिवासाच्युतानन्द नारायण। ....वोद्धव्यानि ॥

४। मुरहर यदुकुलाम्भोधिचन्द्र प्रभो देवकीगर्भरत्न....प्रसीद प्रसीद प्रसीद ॥

५। पाठभेदः—'यत्र दृश्यते....स उच्यते बुधैरशोकपुष्पमञ्जरीति'।

उदाहरणं यथा—मूर्द्धिं चारुचम्पकस्रजामलीकवेष्टनं लसल्लवङ्ग चारुचन्द्रिका कचयु....मधुर्विहर्तुमत्र ॥

मालभारिणी—

विषमे समजा गगौ समे चेत सभरगाद् यः किल मालभारिणी स्यात्[1] ॥३

द्रुतमध्या—

भ-त्रयमोजगतं गुरुकौ चेत यजि च नजौ ज्ययुतौ द्रुतमध्या ॥४

केतुमती—

विषमे सजौ सगुरुयुक्तौ केतुमती समे भरनगाद् गः ॥५

आख्यानकी—

आख्यानकी तौ जगुरुगमोज जतावनोज जगुरु गुरुश्चेत ॥६

विपरीताख्यानकी—

जतौ जगौ गो विषमे समे स्यात्तो जगौ ग एषा विपरीतपूर्वा ॥७

अपरवक्त्रम्—

अयुजि ननरला गुरुः समे तदपरवक्त्रमिदं नजौ जरौ[2] ॥८

पुष्पिताग्रा—

अयुजि नयुगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रा[3] ॥९

१। पाठभेद —

विषमे ससजा यदा गुरू चेत् सभरा येन तु 'मालभारिणी'-यम्।

२। अयुजीति। अयुजि प्रथम-तृतीयपादे यत् यदि, न न र ल गा भवन्ति। समे द्वितीय-चतुर्थपादे न ज ज र भवन्ति तदा इदं अपरवक्त्र भवति।

३। अयुजि प्रथम-तृतीयपादे यदि न न र या भवन्ति। युजि द्वितीय-चतुर्थपादे न ज ज र गा भवन्ति तदा पुष्पिताग्रा भवति।

—इति छन्दोमञ्जरी

यवमती—

स्याद् युग्मके रजो रजौ समे तु जगौ जगौ गुर्यवात परा
यतीयम् ॥१०

(अन्येषां बाहुल्यभयान्नोक्तम )

इत्यर्द्धसमानि

॥ अथ विषमवृत्तम ॥

विषमवृत्तानि खलु त्रिविधानि भवन्ति उद्गता-पदचतुरूर्द्ध्व-
गम्थितप्रभृति भेदात । तेषु उद्गता-भेदान्नाह—

उद्गता—

प्रथम सजौ यदि सलौ च नसजगरकाण्यतः परम्[१] ।
यद्यथ भनभगाः स्युरथो सजसाः सगौ च भवतीयमुद्गता[२] ॥
यद्यथ भनजलगाः स्युरथो' इति क्वचित् ।१

सौरभकम -

ततमुद्गता-सदृशमत्र परमिह तृतीयमन्यथा ।
तावता रनभगैर्गयुतं यदि सौरभकमेतदीदृशम[३] ॥२

ललितम—

नयुगं सकारयुगलं च भवति चरणे तृतीयकम् ।
तदुदितमुरुमतिभिर्ललितं यदि शेषमस्य सकलं यथोद्गता[४] ॥३

इत्युद्गताभेदाः ।

१ । पाठभेद —नसजगुरुकाण्यनन्तरम (—छन्दोमञ्जर्य्याम्) ।

२ । प्रथम आद्यपादे यदि स ज स ल भवन्ति तदनन्तर द्वितीयपादे यदि न स ज गा भवन्ति, अथानन्तरं तृतीयपादे यदि भ न भ गा स्युः, अथ अनन्तरं चतुर्थपादे यदि स ज स ज गा भवन्ति तदा इयं उद्गता भवति ।

३ । अत्रास्मिन् पदानामित्यर्थः । तानि प्रथम-द्वितीय-चतुर्थ-रूपाणि तृतीयं पदं पाद यदि र न भ गै-र्युक्तं सत् अन्यथा जायते तदा ईदृशमेतत् सौरभकं कथयन्ति ।

४ । नयुगमित्यादि । यदि तृतीयं चरणं न-द्वययुक्तं भवति शेषं सकलं चरणं उद्गतावद्भवति तत्तदा इदं उरुमतिभिः कविभिर्ललितं उदितं ।

॥ अथ पदचतुरूर्द्ध्वम्॥

आद्यो पादोऽष्टाभिर्वर्णैस्ततोऽन्ये चतुरक्षरैः क्रमाद्वृद्धाः ।
पादा यस्य तृतीयाद्याः षट्पञ्चाशद्वर्णा यत्र ।
तदिह विबुधजनैरुक्तं पदचतुरूर्द्ध्वं नाम वृत्तम् ।१

[अत्र वर्णागुरुलघुरूपाभिस्तिलतण्डुलवन्मिश्रिता बोध्याः । अपरेषां नोक्तमत्र बाहुल्यभयात्]

इति पदचतुरूर्द्ध्वम् ॥

। अथोपस्थितप्रचुपितम् ॥

मनौ जभौ गौ प्रथमाङ्घ्रिरीक्ष्यते खलु यस्मिन्
त्रितयं सनजरगास्तथा ततो म. ।
अथ नननयुत जय
प्रचुपितमिदमुदितमुपस्थित-पूर्वम् ॥१

[त्रितय द्वितीयाद्याङ्घ्रित्रयमिति । अपरेषां बाहुल्यभयान्नोक्तम् ।

इत्युपस्थितप्रचुपितम् ।

इति विषमवृत्तनिर्णयः ।

॥ अथ वक्त्रप्रकरणमाह ॥

भवत्यर्द्धसमं वक्त्रं विषमञ्च कथ्यते ।
पादयोर्द्वयोरुपान्त्ये[1] छन्दस्तदधुनोच्यते ॥

वक्त्रछन्दः—

वक्त्रं नाद्यान्नसौ स्यातामब्धेर्योऽनुष्टुभि ख्यातम्[2] ॥१

१ । 'तयोर्द्वयोरुपान्त्येऽत्र' वा ।

२ । पाठभेद —

वक्त्रं युग्भ्या मगौ स्यातामब्धेर्योऽनुष्टुभि ख्यातम् ।
अत्र द्विरावृत्त्या श्लोकः पूरयितव्यः ।

—छन्दोमञ्जरी

( आद्यात् प्रथमाक्षरात् परो नसौ न स्याताम् ; एवं चतुर्भिः पादैर्वक्त्रं छन्दः ख्यातं प्रसिद्धम् । अनुष्टुबित्याप्रकरणं, तेनाष्टमोऽपि वर्णः प्राप्तः ) ।

पथ्यावक्त्र--

युजोर्जेन सरिद्भर्त्तुः पथ्यावक्त्रं प्रकीर्त्तितम्[1] ॥२

( शेषौ पादौ वक्त्रवत् )

विपरीतपथ्यावक्त्रम्—

ओजयोर्जेन वारिधेस्तदेव विपरीतादि ॥३

( शेषौपादौ वक्त्रवत )

चपलावक्त्रम्--

चपलावक्त्रमयुजोर्नकारश्चेत् पयोराशेः ॥४

( शेषौ वक्त्रवत् )

युग्मविपुला—

यस्यां लः सप्तमो युग्मे सा युग्मविपुला मता ॥५

( यस्यामनुष्टुभि युग्मे पादे सप्तमो वर्णः लघुर्भवति शेषौ पादौ वक्त्रवत् ) ।

विपुला--

सैव तस्याखिलेष्वपि ॥६

( सैव तस्याचार्य्यस्य मते लघुसप्तमैश्चतुर्भिरपि पादैर्विपुला छन्दः स्यादित्यर्थः ) ।

१ । पाठभेद --

युजोश्चतुर्थतो जेन पथ्यावक्त्रं प्रकीर्तितम् ।

—छन्दोमञ्जरी

भविपुला—

भंनाण्घितो भाद्विपुला ।।७

( अयुजोरित्यापूर्त्तेरनुवर्त्यं, युजोस्तु सप्तमलघुत्वमस्त्येवेति वोध्यम् । एवमग्रिमेषु च ) ।

रविपुला—

इत्थमन्यारश्चतुर्थात् ।।८

नविपुला—

नोऽम्वुधेश्चेन्नविपुला ।।९

तविपुला—

तोऽब्धेस्तपूर्वान्या भवेत् ।।१०

इति वक्त्रनिर्णय. ।।

।। अथ मात्राछन्दः ।।

एकद्वित्रिचतुःपञ्चषट्मात्रा प्रस्तारक्रममुल्लङ्घ्य प्रथमत आर्यामाह । वृत्तरत्नाकरे मात्रावृत्त-

लक्ष्मैतत् सप्तगणा गोपेता भवति नेह विषमे जः ।

षष्ठो जोश्च नलघु वा[1] प्रथमेऽर्द्धे नियतमार्यायाः ।।

षष्ठे द्वितीयलात् परके न्ले मुखलाच्च स यतिपदनियमः ।

चरमेऽर्द्धे पञ्चमके तस्मादिह भवति षष्ठो ल. ।।

श्रुतवोधे—

यस्याः पादे प्रथमे द्वादशमात्रास्तथा तृतीयमपि[2] ।

अष्टादश द्वितीये तर्य्ये पञ्चदश सा चार्या[3] ।।

१ । 'षष्ठोऽत्र न लघु वा' इति वा पाठ ।

२ । पाठभेदः —

द्वादशमात्रा स्थितःस्तृतीयेऽपि ।

३ । अष्टादश द्वितीये चतुर्थे पञ्चदश सार्य्या । —व्याख्यानकौमुदी द्रष्टव्यम् ।

अथ पथ्या—

प्रथमगणत्रयविरतिर्दलयोरुभयोः प्रकीर्त्तिता पथ्या ।

उदाहरणम्—

जय जय जगदीश नाथ, केशव कंसान्तक माधवानन्त ।
कुरु करुणामिति भणि हि, पथ्या भवरोगदुःस्थानाम्[१] ॥
( अन्येषां बाहुल्यभयान्नोक्तम् )

अथ वैतालीय छन्दः—

षड् विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः ।
न समात्र[२] पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः ॥२

उदाहरणम्—

घसृणेन[३] मृदेन चर्चितं नव यन्निन्दति राधिके कुचम ।
मुदमातनुतेऽत्र पाकिमं नद्वैतालीयमिदं फलं हरेः ॥१
( एवमग्रे उदाहरणानि कल्प्यानि )

औपच्छन्दसिकम्—

स्यानामन्ते रयौ गणौ चेदौपच्छन्दसिकं तदाह वृत्तम् ॥२

आपातलिका—

आपातलिका कथितेयं भाद्गुरुकावथ पूर्ववदन्यत् ॥३
( अन्यत् सर्वं पूर्ववत् )
इत्यार्य्या-वैतालीय-निर्णयः ।

॥ अथ कलगीतम् ॥

सगणं निधाय जगणं विधाय श्रुतिमौख्यवाम कलगीत नाम ॥१

---

१ । पाठभेदः—
(१) जय जय नाथ मुरारे केशव कमान्तकाच्युतानन्त ।
कुरु करुणामिति भणिति ( विनतिर्वा ) पथ्या भवरोदुःस्थानाम् ॥
२ । समाऽत्र कलापराश्रिता वा ।
३ । मसृणेन वा । घुसृणेन कुङ्कुमेन—'कुङ्कुमं घसृणम्' इत्यमरः ।

आभीरम्—

एकादशकलधारि कविकुल-मानसहारि ।
इदमाभीरमवेहि जगण अन्तमभिधेहि ॥२

पज्झटिका—

प्रतिपद-यमकित-षोड़शमात्रा
नवमकला-गुरु-भूषित गात्रा[1] ।
पज्झटिका पुनरत्र विवेकः
क्वापि न मध्यगुरुर्गण एकः ॥३

रोला—

प्रतिचरणं रसगुणित-जलधि-कलिका-परिखचितम् ।
रोलानामकवृत्तमिदं फणिनायक-रचितम् ।
एकाधिकदश-विरतियुतं जजहृदयाहरणं
मृदुलपदावलि-ललितमखिल-कविकण्ठाभरणम् ॥४
(इदं काव्यमित्यन्ये)

द्विपथा—

अधिका दश विरचय कला मुहुरेकादश धाम ।
इति दलयुग्मयुतं कलय वृत्तं द्विपथा नाम ॥

पिङ्गले—

तेरह मत्ता पढ़म पअ पुणि एआरह देह ।
पुनि तेरह एआरहहिं दोहालक्खण एह ॥५

सोरट्ठ—

एकादश कुरु तात पुनरिह त्रिदश तनु कलाः ।
सोरट्ठेति सुजातमूपनय वृत्तमुदाररुचि ॥६

१। पाठभेदः—
....नवमगुरुत्वविभूषितगात्रा ।

पिङ्गले—

सो सोरट्ठ उ जान दोहा जइ विवरीअ ठय।
पअ पअजमय वखान नाअराय पिङ्कल कहिअ ॥

चुलियाला—

दोहादलशेषे यथा पञ्चकला विमलो हि विराजति।
फणिवरनृपतिः किल नदा चुलियालामिह नाम नु गायन्ति। ७

कुण्डलिका—

कुण्डलिका सा भण्यते प्रथमं द्विपथा यत्र ।
रोलाचरणचतुष्टयं विलसति विशद तत्र ।
विलसति विशदं तत्र पदावलिरतिमृदुयमिका ।
अस्टपदी या वसति निखिलजनमम्मदगमिका
अस्टपदीया भजति विवुधसुमनो मण्डलिका
लाटप्रासधरा च रसिककर्णे कुण्डलिका ॥८

चतुष्पदा—

कुरु सप्तचतुष्कलमतिशय-निर्मलमन्ते गुरुमुपनीतम् ।
जगतीह चतुष्पदनाम सुशर्मदमहिपतिना परिगीतम् ॥
त्रिंशत्कलपीनं जगण विहीनं दिग्वसुरवि-सविरामम् ।
वुध-संसदि पठितं नवरसघटित वितरति कवये कामम ॥९

पादाकुलकम्—

अक्षरगुरुलघुनियम-विरहितं, भुजगराज-पिङ्गल-परिभणितम् ।
भवति सुगुम्फित-षोड़शकलकं, वाणीभूषा पादाकुलकम् ॥१०

अरिलम्—

षोड़शकल-चरणं भुवि संप्रति, कोदविवर्द्धकमखिलजनं प्रति ।
शेष-यमकलघुयुगलमनोहर,-मरिल नाम किल वृत्तमुदाहर ॥११

सिंहविलोकितम्—

श्रृणु सिंहविलोकितवृत्तवरः वरयमक-मनोहरचरणधरम्।
धरणीपतिमानसमधिकलितं, किल वेदचतुष्कल-गण-ललितम् ॥१२

द्वितीय-पज्झटिका—

चत्वारि चतुष्कलका निधेहि, तत्रापि जगणमन्ते विधेहि।
भणिता फणिनायक-पिङ्गलेन, पज्झटिकेयं षोड़शकलेन[1] ॥१३

षट्पदा—

षट्पद-नामक-वृत्तमिदं फणिमणिरनुगायति।
सचतुर्विंशतिरत्र कला लमदेकादशयति ॥
ईदृशचरणचतुष्कमुपाहित-कविकुलमोदम्।
रसिक-सभाजन-चित्तहरं परिगमित-विनोदम् ॥
अन्याङ्घ्रियुगलमत्र चकास्ति वसु-विंशति-कलिकाञ्चितम्।
कुरु पञ्चदशे विरतिश्रितं श्रवणादपि विदुषां हितम् ॥१४

रुचिरा—

सप्तचतुष्कलगण-कृतदलयुगमन्त्यनिवेशित-गुरुमधुर
न रचय जगणमिहेति फणीश्वर-गदितमिदं वृत्तं रुचिरा ॥१५

---

१। प्रतिपदयमकित षोडशमात्रा
नवमगुरुत्वविभूषितगात्रा।
पजझटिका पुनरत्र विवेकः
क्वापि न मध्यगुरुर्गण एकः ॥
—छन्दोमञ्जरी

उदाहरणं—
तरलवतंसाश्लिष्टस्कन्ध—
श्चलतरपजझटिकाकटिबन्धः।
मौलिचपलशिखिचन्द्रकवृन्दः
कालियाशिरसि ननर्त मुकुन्दः ॥

प्रवङ्गमः—

पञ्चाधिकदश षटय कला मुखगौरवाः
धेहि ततो जगणञ्च गुरुञ्च सुसौरभाः ।
एवञ्चरण-चतुष्कमाह कविदत्तके
पिङ्गलमुनिरिह सुमुखि प्रवङ्गम-वृत्तके ॥१६

दुर्मिला—

द्वात्रिंशन्मात्रं भवति पवित्रं फणिपति-जल्पित-वृत्तवरं
दशवसुभुवनैर्यतिरत्र प्रभवति कविकुलहृदयानन्दकरम् ।
यद्यष्टचतुष्कल-कलितपदसकलमिति दुर्मिलकानामधरं
नरपतितोषणवन्दिविभूषण-भुवनविदित-सन्तापहरम् ॥१७

हाकलिः—

द्विजगण-सगण-भगण-कलिता भवति चतुर्दशकल-ललिता ।
अन्ते गुरुमुपधाय यदा, हाकलिरेषा भवति तदा ॥१८
[ द्विजगणश्चतुर्लघुगणः ]

गगनाकुलम—

षट्कलमादौ विरचय शेषे रगण-विभूषितं,
मध्ये नियमविहीनं द्वादशके यतिसङ्गतम ।
फणिपति-पिङ्गल-वर्णित-कविकुलहृदय-सुरञ्जनं
पञ्चाधिकविंशतिकलवृत्तमिदं गगनाकुलम् ॥१९

जलहरणम्—

लघुगुरुकनियमगतमिह फणिमणिमतमवगतमतिसुखनिगदपं
दशवसुभुवनैर्यतिरिह हि यदि भवति रसिकजनहृदयविहितमदम् ।
वसुविमलचतुष्कलगणकृत....चरणविरामाहित-सगणं
क्वचिदपि गुरुरहितं भवति कविहितं छन्दः सुन्दरि जनहरणम् ॥२०

झुल्लना—

पढ़म दहदिज्जिआ पुण वितह किआ
पुण विदह मत्त तह विवइजाआ।
एमपरिविविहुदल मत्त मततीसपण
एहु कुहु झुल्लणा णाअ राआ ॥२१

घत्ता—

इह सप्तचतुष्कलगण-निर्मितपद त्रिलघु विरामं भवति यदि।
नागाधिप-पिङ्गल-भणित-मुमङ्गल-घत्तावृत्तमिदं द्विपदि ॥२२

घत्तानन्दम्—

एकादशविश्रामि तुरङ्गविरामि यदि घत्ता वृत्तं भवति।
छन्दो घत्तानन्दमिदमानन्दकारि नागपतिरिति वदति ॥२३

पिङ्गले—

सा घतह कुलसारकित्तिअ पारणा अवाय पिङ्गल कहइ।
एआरह वीसाम णन्दउ णाम पुण विसओ तेरह विरइ ॥२४

सवैया—

छद्दह मत्तह पड़मह दिज्जइ मत्त एअत्तिसपात्रपाअ
सोलह पञ्चदहहि जइ किज्जइ अन्तर अन्तर ठाइ सुठाअ।
चउवीणअ मत्त भणिज्जइ पिङ्गल सम्पइच्छन्द मुसार
अन्तलहुअलहु नहु दिज्जहु भण नाम सवैया छन्द अपार ॥२५

गन्धानकम्—

दशसप्तवर्णमिह रत्रय प्रथम-चरणं
द्वितीयमष्टादश कलित अतिहृदयहरणम्।
ईदृशतृतीयदलमपि कुदेय सन्धानक
नागपतिपिङ्गल-भणितमिति शृण गन्धानकम् ॥२६

शिखा—

रस-निहत-दशक-परिमित-कलमधिक-
युगलकलमिह भवति ।
शिखा मुनिहत-युगलघुसकलमिपहतरमलघु
परमपि गुरुयुतमुभयतः ॥२७

( प्रथमे दलेऽष्टाविंशतिर्लघवः प्रान्ते गुरुः, द्वितीये तु त्रिंशल्लघवः प्रान्ते गुरुरिति) ।

खञ्जा—

प्रथममिषुनिहत-रसलघुगुरुकृतम-
परमपि दलमतिललित पदम् ।
गुणहत-नवलघुगुरुयुगलमिह रसहत-
दशगुणकलमिति खञ्जा ॥२८

इति मात्रावृत्त-निर्णयः

॥ अथ गद्यम् ॥

गद्यं[1] पद्यमिति[2] प्राहुर्वाङ्मयं द्विविधं वुधाः ।
प्रागुक्तलक्षणं पद्यं गद्यं संप्रति गद्यते ॥१

१ । वस्तुतस्तु छन्दोनियतं वाक्यमेव पद्यं यदाहुः छन्दोनियमवद्धाक्य पद्यमित्यभिधीयते इति, छन्दोवद्धपदं पद्यमित्यादि च ।

....तत् पद्यं मुक्तकादिभेदात् पञ्चविधं । तदुक्तं—
छन्दोवद्धपदं पद्यं तेनैकेन च मुक्तकम् ।
द्वाभ्यान्तु युग्मकं सन्दानितकं त्रिभिरिष्यते ॥
कलापकं चतुर्भिश्च पञ्चभिः कुलकं मतं ।

२ । पदविच्छेदरहितः पदसन्तानः पदविस्तारो गद्य । तत्तु त्रिप्रकारं चूर्णकोत्कलिकाप्रायवृत्तगन्धिप्रभेदतः ।

अपादः पदसन्तानो गद्यं तच्च त्रिधा मतम् ।
चूर्णकोत्कलिकाप्राय-वृत्तिगन्ध-प्रभेदतः[1] ॥२
अकठोराक्षरं स्वल्पसमासं चूर्णकं विदुः ।
तत्तु वैदर्भरीतिस्थं[2] गद्यं हृद्यतरं भवेत् ॥३

अथोत्कलिकाप्रायम्—

भवत्युत्कलिकाप्रायं[3] समासढ्यं दृढाक्षरम् ॥४
(उत्कलिकाप्राय कल्लोलप्रायमुत्प्रभासमानमित्यर्थः)

अथ वृत्तगन्धि —

वृत्तैकदेश-सम्बन्ध वृत्तगन्धि[4] पुनः स्मृतम् ॥५
इति गद्यनिर्णयः

१। (क) चूर्णक यथा—
स हि त्रयाणामेव जगतां गतिः परमपुरुषः पुरुषोत्तमः। दृप्तदानवभरेण ...संसारसागरपारमवलोकयति ।

(ख) उत्कलिकाप्राय यथा—
प्रणिपातप्रवणसप्रधानाशेषसुरासुरादिवृन्दसौन्दर्यप्रकटकिरीटकोटिनिविष्ट-स्पष्टमणिमयूखच्छटाच्छुरित-चरणनखचक्र। ...मामनुगृहाण ।

(ग) वृत्तिगन्धि—
जय जय जनार्द्दन ! सुकृतिजनमनस्तडागविकस्वरचरणपद्म !....मामनधिभवदुःखव्याकुलं रक्ष रक्ष ।

२। वैदर्भी रीतिश्च यथा—
माधुर्यव्यञ्जकवर्णै रचना ललितात्मिका ।
आवृत्तिरल्पवृत्तिर्या वैदर्भीरीतिरिष्यते ॥

मतान्तरं यथा—
असमस्तैकसमस्ता युक्ता दशभिर्गुणैश्च वैदर्भी ।
वर्णद्वितीयबहुला स्वल्पप्राणाक्षरा सुविधेयेति ॥

३। 'भवति' इत्यपि पाठः ।
४। 'वृत्तैकदेशसम्बन्धाद्वृत्तगन्धि' इति वा पाठः ।

श्रीघनश्यामदासेन कृतं यत् सर्वसम्मतम् ।
तन्निरालस्यामस्यार्थे निरतं परिचिन्तय ॥६

इति श्रील नरहरि-चक्रवर्त्तीना ( घनश्यामदासेन वा )
सङ्गीतसारसंग्रहे छन्द-प्रकाश-प्रकरणाख्यो षष्ठोऽध्यायः ॥६॥
॥ इति श्रीसङ्गीतसारसंग्रहः समाप्तः ॥
श्रीकृष्णचन्द्राय नमः ।
श्रीचैतन्यचन्द्राय नमः ।
॥ शकाब्दा १७२५ ॥

——०——

# ERRATA

| Page | | Line | | Correct Reading |
|---|---|---|---|---|
| 2 | ... | 24 | ... | सङ्गीतं |
| 3 | ... | 5 | ... | विष्णोरंशा |
| 3 | ... | 8 | ... | शास्त्रे |
| 3 | ... | 9 | ... | योगिणी |
| 3 | ... | 17 | ... | सुस्वरैर्वचितानि |
| 4 | ... | 2 | ... | शम्भोरग्रे |
| 5 | ... | 3 | ... | स्वरैः |
| 5 | .. | 9 | ... | तृतीयश्चापि |
| 5 | .. | 22 | ... | स्तजज्ञै र्मानव स प्रमोदनात् |
| 6 | ... | 2 | ... | ग्रहांश |
| 7 | ... | 1 | ... | पुत्राणां |
| 8 | .. | 8 | ... | वृषभस्येव |
| 9 | ... | 5 | ... | सः |
| 9 | ... | 13 | ... | विवादिनौ |
| 10 | ... | 21 | ... | नैधैवतान्तं |
| 10 | .. | 25 | ... | मूर्छनाः |
| 11 | ... | 23 | | वितानैः |
| 11 | .. | 24 | ... | ययुरनङ्ग |
| 12 | ... | 1 | ... | अथ तानाः |
| 12 | .. | 2 | ... | तानाः |
| 12 | ... | 9 | .. | ज्ञं यत्वाश्च |
| 12 | ... | 18 | ... | अनुगताथना |

| *Page* | | *Line* | | *Correct Reading* |
|---|---|---|---|---|
| 13 | ... | 7 | ... | हृद्भ्यासो |
| 14 | ... | 11 | ... | धैवती |
| 14 | ... | 25 | ... | तत्तद्धीणास्वेव |
| 16 | ... | 12 | ... | देशकारी च |
| 16 | ... | 17 | ... | स्तथा |
| 16 | ... | 20 | ... | षट्त्रिंश |
| 17 | ... | 15 | ... | वासन्तिकश्च |
| 18 | ... | 4 | ... | रागास्त्रिंश |
| 18 | ... | 6 | ... | निवन्धे |
| 18 | ... | 11 | ... | -द्वालपेत्पूव |
| 18 | ... | 19 | .. | द्विधा गीत |
| 19 | ... | 3 | ... | भेदा |
| 19 | ... | 8 | . | पदंरेवेति |
| 19 | ... | 10 | ... | हरिनायकस्तु |
| 19 | ... | 21 | ... | रूपकम् |
| 21 | ... | 10 | .. | न त्वङ्गतया |
| 21 | ... | 12 | ... | पद-ताल-स्वराः |
| 21 | ... | 16 | .. | स्यान्मङ्गलः |
| 22 | ... | 4 | ... | -दीपनी |
| 22 | ... | 23 | . | नरैः |
| 24 | ... | 9 | ... | स वर्णः |
| 25 | ... | 2 | ... | द्वेषा |
| 25 | ... | 10 | ... | द्वेधा |
| 25 | ... | 12 | ... | रागैश्च |
| 25 | ... | 15 | ... | स्यात्तालं (?) |

| *Page* | *Line* | *Correct Reading* |
|---|---|---|
| 26 | 2 | पाटैः |
| 26 | 11 | मुदाहृतम् |
| 26 | 25 | वाद्यादैः |
| 27 | 4 | मुनिभिर्भरतादिभिः |
| 27 | 7 | छायालगो |
| 27 | 21 | आद्यो |
| 28 | 16 | अन्येषां |
| 28 | 21 | ध्रुवाद्यो |
| 28 | 25 | कुडुक्को |
| 29 | 5 | ध्रुवस्तूच्चैः |
| 29 | 8 | आदितालेन |
| 32 | 2 | लघ्वेकमात्रन्तु |
| 32 | 3 | द्रुतकार्द्धमात्रं |
| 32 | 5 | स्मृतम् |
| 32 | 14 | कश्चिदुच्यते |
| 33 | 10 | विधेत्ययं |
| 33 | 18 | 11250 |
| 34 | 10 | द्रुतेनैके |
| 34 | 12 | ध्रुवमात्रेण |
| 34 | 24 | परिकीर्तितम् |
| 35 | 5 | प्रीत्यैर्लिख्यन्ते |
| 35 | 6 | चाचपुटे |
| 35 | 11 | विरामाद्यैश्च |
| 35 | 21 | गुरुलेपौ |
| 36 | 1 | मल्लिकादिके |

| Page | Line | Correct Reading |
|---|---|---|
| 36 | 9 | लसगन |
| 36 | 12 | सगना— |
| 36 | 17 | स्युर्विन्दु |
| 36 | 18 | द्वौदं |
| 37 | 2 | पूर्णं |
| 37 | 16 | दद्वयाझगो |
| 37 | 20 | द्रुतद्वन्द्व |
| 37 | 21 | लद्दा |
| 38 | 12 | गोकुलरमणी |
| 40 | 3 | ज्ञेया |
| 40 | 25 | सुजनजनं |
| 41 | 5 | चित्रकलयोः |
| 41 | 14 | गदित— |
| 42 | 6 | धीर |
| 43 | 1 | गौड़ |
| 43 | 13 | लापाद्दहृन्य |
| 43 | 22 | विषयमिव |
| 43 | 23 | लिखिता |
| 44 | 20 | —मात्रेण |
| 44 | footnote | पाठान्तरम् |
| 45 | 1 | गीतगोविन्द ? |
| 45 | 3 | पतति |
| 45 | footnote | द्विगुणाद् |
| 46 | 4 | भेदः |
| 46 | 14 | प्रभेदस्तिरिपः |

| *Page* | | *Line* | | *Correct Reading* |
|---|---|---|---|---|
| 47 | ... | 1 | ... | निर्मितो |
| 47 | ... | 8 | ... | स्वरानुत्तरोत्तरान् |
| 47 | ... | 20 | ... | सप्तप्रकारो |
| 48 | ... | 6 | ... | वर्गग्रह |
| 48 | ... | 14 | ... | निवन्धनश्च |
| 48 | ... | 15 | ... | श्रवणाप्रियत्वम् |
| 48 | ... | 20 | ... | क्वचिद्द्वित्वं |
| 49 | ... | 10 | ... | प्रभेदवित् |
| 49 | . | 14 | ... | निर्दोषो |
| 50 | ... | 2 | ... | त्रिधा |
| 50 | ... | 7 | ... | ग्रामवस्थस्तथा ? |
| 51 | . . | 9 | . . | चक्रवर्तिना |
| 52 | ... | 16 | .. | रावणहस्तश्च |
| 53 | ... | 11 | ... | तत्र देया |
| 53 | .. | 15 | . . | तारे मन्त्रे च घो' च त्रिस्थाने विन्दुरिष्यते। |
| 53 | ... | 17 | . | Sloka No. 14 |
| 54 | ... | 1 | ... | तुम्वीमूलं समुपेत्य |
| 54 | ... | 12 | ... | वाहुल्यभीतिना |
| 54 | ... | 13 | ... | तज्ज्ञानग्राह्निनैः (?) |
| 55 | ... | 11 | ... | यद्वाचिपिटक |
| 56 | .. | 3 | ... | ्रेह्विड् |
| 56 | ... | 9 | ... | मर्दलः |
| 56 | ... | 18 | ... | उद्देशक्रमेण |
| 57 | ... | 8 | ... | पुटयोगेन |

| *Page* | | *Line* | | *Correct Reading* |
|---|---|---|---|---|
| 57 | ... | 14 | ... | भरतद्युक्ताः * * पाटयोः |
| 57 | ... | 18 | ... | मार्दङ्गिक |
| 57 | ... | 20 | ... | समस्तगमक |
| 59 | ... | 7 | ... | परिकीर्त्यते |
| 59 | ... | 9 | ... | द्वयङ्गुलश्च |
| 59 | ... | 14 | ... | श्रैष्ठमाह |
| 59 | ... | 17 | ... | संज्ञेत्याह |
| 59 | ... | 21 | ... | पञ्चादिनवाङ्गुलान्ता |
| 59 | ... | footnote | ... | विजयस्तु |
| 60 | ... | 15 | ... | वांशिको |
| 61 | ... | 4 | ... | बाहुल्याच्च |
| 61 | ... | 4 | ... | दामोदरे |
| 61 | ... | 16 | ... | पाठे |
| 62 | ... | 3 | ... | मध्ये गुञ्जास .. |
| 62 | ... | 9 | ... | कार्य्यं |
| 62 | ... | 11 | ... | तिर्यग् * * परिध्वंशेन ताड़येत् |
| 62 | ... | 18 | ... | चक्रवर्तिना |
| 63 | ... | 14 | ... | तदाद्यं |
| 64 | ... | 8 | ... | गात्रविक्षेप— |
| 64 | ... | 12 | ... | ब्रह्माद्यैर्मार्गित |
| 64 | ... | 18 | ... | प्रवक्ष्यामि |
| 64 | ... | 19 | ... | नाम्नामुच्यते |
| 64 | ... | 23 | ... | डिमः |
| 65 | ... | 19 | ... | ज्ञेयं |
| 65 | ... | footnote | ... | तिसृभि — |

| *Page* | | *Line* | | *Correct Reading* |
|---|---|---|---|---|
| 66 | ... | 2 | ... | द्वेधा |
| 66 | ... | 8 | ... | बर्द्धमानो |
| 66 | ... | 13 | ... | द्विधेत्यर्थः |
| 66 | ... | 15 | ... | अङ्गविक्षेप |
| 66 | ... | 18 | ... | भेदनं |
| 66 | ... | 19 | ... | तद्वाणीगत... |
| 67 | ... | 2 | ... | ·पराङ्मुखकैं— |
| 67 | ... | 5 | ... | -भाषारसैः |
| 67 | ... | 11 | ... | भावैं रसै— |
| 67 | ... | 15 | ... | चुम्बनैरिति |
| 68 | ... | 2 | ... | लास्यांङ्गा— |
| 68 | ... | 3 | ... | प्रयोजनानीति |
| 68 | ... | 9 | ... | करणंरल्पै— |
| 68 | ... | 15 | ... | राधुनिकैः |
| 68 | ... | 20 | ... | द्वंतोर्मया |
| 69 | ... | 5 | ... | शावरनृत्यम् |
| 69 | ... | 11 | ... | -र्गायन्त्योश्च |
| 69 | ... | 13 | ... | मुक्तावलीनृत्यम् |
| 69 | ... | 21 | ... | वेशादीनि |
| 69 | ... | 25 | ... | चक्रवर्तिना |
| 70 | ... | 1 | ... | अभिनयो |
| 70 | ... | 15 | ... | ...हसस्तु स्तनौ |
| 70 | ... | 20 | ... | जानु |
| 71 | ... | 2 | ... | स्तनौ |
| 71 | ... | 5 | ... | कपोलोष्ठो |

| *Page* | | *Line* | | *Correct Reading* |
|---|---|---|---|---|
| 72 | ... | 22 | ... | स्यानुधारणे |
| 72 | ... | 23 | ... | दृश्यते |
| 73 | ... | 6 | ... | मुखीकृतं |
| 73 | ... | 19 | ... | तिर्य्यकस्क ... |
| 75 | ... | 15 | ... | पार्श्वगश्चैव |
| 75 | ... | 18 | ... | उत्तानो— |
| 76 | ... | 12 | ... | असंयुतेषु |
| 77 | ... | 2 | ... | बाहुत्वाच्च |
| 77 | ... | 5 | ... | ऋजवोऽङ्कुलयः |
| 77 | ... | 8 | ... | पक्षिपक्षे |
| 77 | ... | 18 | ... | कार्य्यौ पताकौ |
| 77 | ... | 19 | ... | छेदने |
| 77 | ... | 21 | ... | गुहाम् |
| 78 | ... | 14 | ... | सन्देहे |
| 79 | ... | 1 | ... | कार्य्यौ |
| 79 | ... | 12 | ... | सोऽयमर्द्धचन्द्राभिधः |
| 79 | ... | 13 | ... | पराङ्मुखः |
| 79 | ... | 18 | ... | घटे— |
| 82 | ... | 11 | ... | तल्लक्ष्म |
| 82 | ... | 13 | ... | कुब्ज ... |
| 82 | ... | 18 | ... | चैत्यभ्रगः * * पार्ष्णिगो |
| 82 | ... | footnote | ... | उच्यते |
| 83 | ... | 2 | ... | स्थितो |
| 84 | ... | 5 | ... | वर्तते |
| 84 | ... | 8 | ... | ज्जृम्भा |

| Page | | Line | | Correct Reading |
|---|---|---|---|---|
| 85 | ... | 3 | ... | वुधं: |
| 85 | ... | 5 | ... | नोक्तम् |
| 85 | ... | 8 | ... | भुपणम् |
| 85 | ... | 12 | ... | दृष्टय * * उद्दिशाम: |
| 85 | | footnote 8 | ... | च |
| 85 | | ,, 9 | ... | षड्त्याहुरपरे |
| 86 | ... | 10 | ... | अनभिव्यक्तार्द्धतारका |
| 86 | ... | 13 | ... | स्थिरां |
| 86 | ... | 19 | ... | स्याद् विक्षिप्त |
| 86 | ... | 20 | ... | दृष्टिर्भयान्विता |
| 87 | ... | 14 | ... | आकुञ्चिता |
| 89 | ... | 5 | ... | दधत्यापाङ्गी |
| 89 | ... | 11 | .. | शङ्कायां * * निःशङ्कसूरिणा |
| 89 | .. | 18 | ... | षट्त्रिंशद्दृष्टयः |
| 89 | .. | 19 | ... | ताराभ्रुकुटी |
| 90 | ... | 3 | ... | पञ्चधोदितम् |
| 90 | ... | 4 | ... | नृत्यांगेषु एकैकमप्यनेकप्रकारं |
| 90 | ... | 6 | .. | चक्रवर्तिना |
| 90 | | footnote 4 | | त्रयोविंश... |
| 91 | .. | 3 | ... | द्वेधा |
| 91 | .. | 8 | . | चन्द्रो |
| 91 | ... | 12 | ... | मणि.प्रभृतयः |
| 91 | | footnote 5 | .. | तद्भवस्तत् |
| 91 | | ,, 6 | ... | प्राकृते |
| 91 | | ,, 7 | ... | सिन्दुरं |

| *Page* | *Line* | *Correct Reading* |
|---|---|---|
| 92 | ... 13 ... | षोड़श |
| 92 | ... 19 ... | हीना |
| 92 | footnote 5 ... | नान्यगामिनी |
| 92 | ,, 6 ... | निगद्यते |
| 93 | ... 9 ... | शाबरं |
| 93 | ... 18 ... | सर्वत्र भेदोऽयं |
| 93 | footnote 1 ... | संस्कृता |
| 93 | ,, 2 ... | मिश्रार्द्धमागधी |
| 93 | ,, 6 ... | लंकेश्वर... |
| 94 | ... 1 ... | वाह्लीकाश्च |
| 94 | ... 2 ... | लक्षणमस्तेत्रेति |
| 94 | ... 15 ... | -वैंपरीद्दयत: |
| 94 | ... 20 ... | अवधारणीया |
| 95 | ... 4 ... | यथाहि |
| 95 | ... 8 ... | अथापभ्रंश— |
| 95 | ... 14 ... | रूपकरूपके |
| 95 | ... 20 ... | पैशाची * * नटादिभि... |
| 96 | ... 2 ... | भाषापि गद्या |
| 97 | ... ... | छन्द:प्रकाश-प्रकरणम् |
| 97 | ... 4 ... | छन्द:पकाश: |
| 97 | ... 13 ... | लघुर्लघुश्च |
| 97 | footnote 1 ... | गङ्गादासेन विरचितायां |
| 98 | ... 3 ... | अन्ती |
| 98 | ... 22 ... | वृत्तरत्नाकरे |
| 101 | ... 1 ... | गणे |

| *Page* | *Line* | *Correct Reading* |
|---|---|---|
| 102 | ... 1 ... | वर्णनिषेधमाह |
| 102 | ... 9 ... | पउद्दरामिम |
| 102 | footnote 1 ... | गङ्गादासेन विरचितायां |
| 102 | ,, 2 ... | अयम् । भावार्थ सन्दीपनी |
| 102 | ,, 5 ... | रचितेत्यर्थः |
| 103 | ... 9 ... | पदैर्वाच्या |
| 103 | ... 16 ... | पक्षाद्यं र्यतिर्वाच्या |
| 103 | ... 17 ... | सौन्दर्य्यं |
| 104 | .. 6 ... | वृत्तमर्द्धं .. |
| 104 | ... 10 .. | पादादेकैकाक्षर |
| 104 | ... 17 ... | धृतिश्चैव |
| 105 | ... 7 ... | द्विगुणीकृतः |
| 105 | ... 11 ... | रक्षु द्वितीयाश्च |
| 105 | ... 17 ... | लंघु |
| 106 | . ... 4 .. | त्रयोदशमुखाः |
| 107 | footnote 5 | राधिका श्रीपते |
| 108 | ,, 4 ... | नमति |
| 108 | ,, 14 | तन्तमध्या |
| 109 | ... 4 ... | मधुमती |
| 109 | footnote 13 ... | श्रुतिस्मृति |
| 110 | .. 8 | सजरैर्भुज... |
| 110 | footnote 4 | -सु''दा |
| 110 | ,, 7 ... | पीत्वा |
| 111 | ... 16 ... | चतुर्दशास्याः |
| 112 | ... 8 ... | क्रमाज्ज्ञेया |

| *Page* | *Line* | *Correct Reading* |
|---|---|---|
| 112 | ... 13 ... | अथोट्टनिका |
| 112 | ... 24 ... | भेदाः |
| 113 | ... 6 ... | भ्रमर .. |
| 113 | ... 9 ... | इयेनुदीरिता |
| 114 | ... 21 ... | प्रहर्षिणीयम् |
| 115 | ... 4 ... | सन्धिवर्षिणी |
| 115 | ... 8 ... | शाक्करी |
| 115 | ... 13 ... | भजसनः |
| 115 | ... 15 ... | शाक्करी |
| 116 | ... 15 ... | भात्ममतन— |
| 118 | footnote 1 ... | यतिश्चेत्तदा * * कय, कनकेकिल्कमत्यन्ये |
| 118 | ... 7 .. | रसाश्वाश्वैः |
| 118 | ... 12 ... | यतिरिह |
| 118 | ... 15 ... | मप्रभकारयुगंक— |
| 119 | ... 3 ... | -यतियुक् |
| 119 | ... 5 ... | भतनाः सभौ |
| 119 | ... 10 ... | -च्छेदेपेतं |
| 119 | ... 13 ... | -मपवाहाख्यम् |
| 119 | ... 14 ... | गतानि |
| 120 | ... 13 ... | मञ्जरी |
| 121 | ... 8 ... | गुम्फितः |
| 121 | .. 12 ... | -यृत्तमुक्ताह्रियते |
| 121 | footnote 5 ... | विषमे |
| 121 | ,, 8 ... | पादे |

| *Page* | | *Line* | | *Correct Reading* |
|---|---|---|---|---|
| 122 | ... | 2 | ... | मसजा |
| 122 | ... | 11 | ... | स्यात्तै— |
| 123 | ... | 8 | ... | भेदानाह |
| 123 | ... | 19 | ... | गताभेदा: |
| 124 | ... | 13 | .. | द्वितीयाद्यङ्घ्रि |
| 125 | ... | 11 | ... | -कारश्चेत् |
| 125 | .. | 19 | ... | पादैर्विपुला |
| 127 | ... | 12 | ... | अरडाहे |
| 128 | ... | 11 | ... | घुसृणेन |
| 129 | ... | 12 | ... | जनहृदयाहरणं |
| 129 | ... | 23 | . | सुजातमुपनय |
| 130 | ... | 11 | ... | अष्टपदीया |
| 130 | .. | 12 | | ” |
| 130 | ... | 23 | .. | मोदविवर्द्ध... |
| 131 | ... | 5 | . . | लिम्भेहि |
| 132 | ... | 20 | .. | जनहरणम् |
| 133 | ... | 3 | ... | मत्ततह |
| 135 | ... | 2 | . | वृत्तगन्धि... |
| 135 | ... | 6 | . | समासाढ्य |
| 135 | ... | 9 | ... | वृत्तैकदेश |
| 136 | ... | 2 | ... | तन्निरालस्यम..र्थे- |
| 136 | ... | 3 | ... | -कवर्तिना |
| 136 | ... | 4 | | छन्द:प्रकाश... |